# कर्णार्जुनीयम् महाकाव्यम्

भारत-शासन-शिक्षा मन्त्रालय-प्रदत्त-वित्तीय-साहाय्यतः मुद्रितम्

रचयिता
शास्त्राचार्य-विन्ध्येश्वरीप्रसादशास्त्री

प्राप्तिस्थानम्
स्वयम्भाति-पुस्तकालयः
४३।१७ सदानन्द बाजार, वाराणसी।

शकाब्दः १८८९, मूल्यम् २·२५ रु०

प्रकाशकः—
श्रीविन्ध्येश्वरी प्रसाद् शास्त्री
डी ४३ १७, सदानन्द बाजार, वाराणसी

श्रीमत्पण्डितगोपालचन्द्रवेदान्तशास्त्रिणा ।
शोधनेऽस्य श्रमो यादृक् कृतः सोऽस्त्यतिदुर्लभः ॥

मुद्रकः
लक्ष्मीनारायणः शीतला प्रेस,
वाराणसी ।

# विपश्चिदपश्चिमानां शुभाशंसनानि

श्रीमता मतिमता भव्यकाव्यकर्मवर्मवरूथेन पण्डितमण्डन-श्रीविन्ध्येश्वरी प्रसादमिश्रशास्त्रिमहाशयेन सन्दब्धं कलितललितपदबन्धं प्रसन्नमपि गम्भीरं प्रसिद्धम् अपि दुरूहं तुलनात्मकं नातिविस्तृतं हृदयग्राहि भारतपद्मपुराणप्रमुख-प्रमाणविहितोपष्टम्भं वीररसोपबृंहितं युवजनप्रियं प्रवाहमयं शिक्षाप्रदं सौम्यं सुभगं स्पृहणीयतागुणगणगौरवापूरितं "कर्णार्जुनीयम्" नाम महाकाव्यं समनुसन्धानप्रधानं समाकलय्य नितरां प्रीणितो "भवन्ति भव्येषु हि पक्षपाता" इति न्यायेन समावर्जितोऽस्य यशःश्रियं प्रसृमरामुत्तरोत्तरं निभालयितुं स्पृहयालुरदसीयं प्रचार-प्रसारं सर्वतोमुखं काङ्क्षन् शुभाशंसनशतैर्ग्रन्थग्रन्थनटीयसः कवेः कृतिं च कमनीयां पूरयन् हस्ताहस्ति गृह्यमाणतां गुणगृध्नुभि सत्वरं सम्पाद्यमानां वाञ्छति। इतः पूर्वं मेतेन कविना "महर्षिश्रीज्ञानानन्दचरितम्" महाकाव्यं त्रयोविंशतिसर्गात्मकं सन्दब्धम् इति ज्ञात्वा नितरां प्रसीदति च ।

महेश्वरानन्दसरस्वती

ऊर्ध्वाम्नाय-काशीस्थ-सुमेरुपीठाधीश्वरः

( पूर्वाश्रमे कवितार्किकचक्रवर्ती, पण्डितशिरोमणिः, हिन्दूविश्वविद्यालयीय-संस्कृतमहाविद्यालय-भूतपूर्वाध्यक्षः )

I am glad to write that Pandit Vindhyeshwari Prasad Shastri has been personally known to me for a very long time. He has been rendering valuable service to the cause of Sanskrit Learning for about 30 years by editing Sanskrit Journals, writing a series of books in Sanskrit and in various other ways.

I wish wide circulation of his valuable book 'Karnarjuniyam'.

Sd. Gopinath Kaviraj
Mahamahopadhyaya, M. A., D. Lit.
Late Principal,
Govt. Sanskrit College,
Varanasi.

# कर्णार्जुनीयम् महाकाव्यम्

## प्रथमः सर्गः

श्रियं समुद्धर्त्तुमनाः स यो निजामयोनिजां मैथिलनन्दिनीं प्रियाम् ।
विधाय मैत्रीं दिननाथसूनुना महेन्द्रपुत्रं निजघान राघवः ॥१॥

कृतं तदालोक्य मधुच्छिदोऽप्रियं दिवस्पतिः स्वीयमनस्यखिद्यत ।
स्वयं तदभ्यर्णमुपेयुषाऽमुना हरेरुपालब्धिरनुष्ठितेदृशी ॥२॥

सतां मतस्त्वं हि पुराणपूरुषो नरेन्द्ररूपः श्रुतिसेतुपालकः ।
अहो त्वयैतत् किमकार्यशोभनं नराधमेनापि च यद् विगर्हितम् ॥३॥

नरो निषादोऽपि परापवादतो भयेन शोकार्णवविप्लुतोऽपि वा ।
अधर्म्यमस्वर्ग्यमकृत्यमीदृशं समाचरेन्नैव निजार्थसिद्धये ॥४॥

स्वसम्मुखं घ्नन्ति समागतान् द्विषो धनुर्भृतः क्षत्रियधर्मवित्तमाः ।
परेण युद्धे निरतं निरागसं निहन्ति कोऽन्यो निभृतो भवानिव ॥५॥

तवास्ति चेत्स्वार्थविचेष्टितं मतं तथापि मत्सूनुवधस्तु नोचितः ।
दशाननो यस्य निदेशमात्रतो हृतां स सीतां भवते समर्पयेत् ॥६॥

समीपगं संगरकामुकं पुरा निशाचराणां पतिमात्तकार्मुकम् ।
निगृह्य कक्षे सुररक्ष यो बली स मे सुतः कस्य न कर्णगोचरः ॥७॥

निदर्शनं क्षत्रियधर्मपालने तवावतारोऽस्ति विकर्त्तनान्वये ।
जगत्स्वमर्यादितकर्म कुर्वतो मनो ह्यधर्मत्रपया न दूयते ? ॥८॥

विकर्त्तुमाकर्त्तुमकर्त्तुमीश्वरः प्रभुस्त्वमेवासि परं न मन्यसे ।
अतो निजे चेतसि यद् यदीहसे भुवीह तत्तद् विदधास्यशङ्कितः ॥९॥

विधीयमानेऽम्बुधिमन्थने पुरा जगज्जिहीर्षद् विषमुल्बणं त्वया ।
विनिर्गतं भूधरराजकन्यका-प्रियाय दत्तं प्रमथाधिपाय तत् ॥१०॥

महीयसी वामदृशां गरीयसी सुहासिनी विश्वजनैकमोहिनी ।
समाददाते कमलालया त्वया समस्तरत्नप्रवरश्च कौस्तुभः ॥११॥

ऋतानृतं त्वं वचनं न मन्यसे सदैव धर्मात्मतया विकत्थसे ।
स्वमायया विभ्रमशीलया जगद् विवर्त्तयन् मोदमवैषि चात्मनि ॥१२॥

तमात्मनीनं नियमं सुबिभ्रती प्रशंसनीया गणिका च गण्डकी ।
त्वयाऽपकर्त्रा कुटिलस्वभावतः स्वधर्मतो भ्रंशयितुं परीक्षिता ॥१३॥

अनन्यधन्या गुणगौरवान्विता त्रिलोकमूर्धन्यमिता पतिव्रता ।
प्रसिद्धजालन्धरगेहिनी त्वया तदीयपत्यात्मभृता विगर्हिता ॥१४॥

निशम्य वाचं सुमनस्पतेरिमामुदीरितां तां रघुवंशभूषणः ।
स नैव चुक्रोध न वै विसिस्मिये भवन्ति सन्तो निगृहीतचेतसः ॥१५॥

तमुक्तवन्तं मघवानमीदृशं जगाद भूतं भवितव्यमीक्षिता ।
विधातृकृत्यं न तवास्ति गोचरं त्वयेदृगस्मात् समुदीरितं वचः ॥१६॥

अयं महागाः श्रुतिविप्रतीपकृज्जहार पत्नीमधमोऽनुजन्मनः ।
विजानताऽतोऽस्य वधो मया कृतः स्वधर्मरक्षाव्रतिनो हि भूभृतः ॥१७॥

सुता सुतस्यापि वधूः सहोदराऽनुजस्य जाया च समा इमा मताः ।
विनिक्षिपेद् गर्हितदृष्टिमासु यो न तद्वधे दोषमुशन्ति साधवः ॥१८॥

महौजसस्ताञ्जनताऽपकारिणः स्वधर्मगोप्ता जन-ताप-कारिणः ।
मृगान् विनिघ्नन् निभृतोऽपि भूपतिर्विगीयते नैव विपश्चिता श्रुतेः ॥१९॥

अधर्मकृद् द्विड् विनिपातितो मया निजो विपन्नश्च सुहृत् सुरक्षितः ।
कृतः स्वपत्नीविचयोऽपि सिद्धिदः सदादृता ह्यर्थकरी मम क्रिया ॥२०॥

उभाविमौ बालिदिनेश्वरात्मजौ निबद्धवैरौ निजपूर्वजन्मतः ।
सपत्नभावेन परस्परं हतौ न मोक्षमद्याप्यधिगन्तुमर्हतः ॥२१॥

प्लवङ्गमत्वं परिहृत्य मुक्तिदं मनुष्यरूपं जननान्तरे यदा ।
ग्रहीष्यतो मृत्युमुपेत्य यास्यतो ध्रुवं हि निर्वाणपदं सुदुर्लभम् ॥२२॥

अयं सुकण्ठस्त्वतितिग्मतेजसो जनिष्यतेऽस्यां भुवि कर्णनामतः ।
तवात्मजो बालिरसौ पुन र्जनुः प्रपद्य नूनं भविता तथाऽर्जुनः ॥२३॥

उभौ तु दुर्धर्षधनुर्धरौ मतौ परस्परं स्वं विजयं रणाङ्गणे ।
समीहमानौ नितरां भविष्यतः सुरासुराणामपि विस्मयावहौ ॥२४॥

जनिष्यमाणौ त्रियुगात्यये त्विमौ द्विजन्मदौ चापि सदेकमातृकौ ।
विधेर्विधानेन महामहीभुजां निदानतां स्वर्गगतेर्गमिष्यतः ॥२५॥

द्वयोर्महाभारतनाम्नि संयुगेऽवलम्बमाश्रित्य मया ग्रसिष्णुना ।
क्षयेण दैत्यप्रतिरूपभूभुजां वसुन्धराभार इहाहरिष्यते ॥२६॥

छलानृताधर्ममुपेयुषा मयाऽवतीर्य नूनं वसुदेवसद्मनि ।
तवात्मजेनांशुमदात्मजन्मवान् महाबलीयानपि घातयिष्यते ॥२७॥

प्रपूर्णसच्चिन्मुदमाप्य सम्भवं भवे न मे किञ्चिदसम्भवं भवेत् ।
अतोऽवतारेऽत्र विमुग्धचेतसो भवन्ति नित्यं बहवो विपश्चितः ॥२८॥

स्वमायया प्रत्यहमार्द्रमृत्स्नया यदृच्छया पात्रचयं कुलालवत् ।
सृजाम्यनन्तं विसृजाम्यनेकधा न पारतन्त्र्यं भजते मतिर्मम ॥२९॥

वचः समाकर्ण्य धरात्मजापतेस्तुतोष किञ्चिच्च जगाम वृत्रहा ।
प्रवृत्तिमेतामनुसृत्य बुध्यते स्वयम्भुवा कर्णवधो विनिश्चितः ॥३०॥

व्यजेष्ट कर्णं यदि वीरमर्जुनस्तथाऽपि कर्णो विजयीति मे मतिः ।
पराजितस्यापि यतो ह्यधर्मतः श्रुतेरभिज्ञैर्विजयः प्रकीर्त्तितः ॥३१॥

निपातितेऽस्मिन् वसुषेण आहवे निनिन्द पार्थं गगनेरितं वचः ।
रथाङ्गपाणिः कपिकेतुसारथिः स चापि तत्कालमभून्नताननः ॥३२॥

अनूनमस्यापि बलं, पराक्रमो धनञ्जयस्यापि च नूनमद्भुतः ।
सदद्वितीयं चरितं समुन्नतं तथाऽपि कर्णोऽभिमतस्ततोऽधिकः ॥३३॥

महत्त्वमेतच्च समस्तमार्जुनं परस्य पुंसो हि भवत्यपेक्षितम् ।
तरिस्तदीया न च पारमाश्रयेन्न कर्णधारो भगवान् भवेद् यदि ॥३४॥

यदा स मध्ये स्थित आस सेनयोर्द्वयोश्च मूढत्वमुपागतस्तदा ।
गरुत्मकेतोरनुशासनादृते भवेत् तदीया क्व कीदृशी गतिः ॥३५॥

यदा न चेत्स्यन्दनवाहको भवेज्जगत्पतिः श्रीवसुदेवनन्दनः ।
प्रसिद्धगाण्डीवधरोऽपि पाण्डवो मृधे न तिष्ठेद् विजयस्य का कथा ॥३६॥

अशेषशक्तेः किल केन्द्रमुच्यते स एव नूनं भगवानधोक्षजः ।
अवैदिदं धामनिधेस्तनूजनुः परं न विद्वानपि पाण्डुनन्दनः ॥३७॥

अरण्यमार्गाच्चरतोऽर्जुनस्य ते वनौकसो यष्टिभिरस्य कार्मुकम् ।
अनैषिषुर्निष्फलतामसौ तदाऽवधारयामास महत्त्वमीशितुः ॥३८॥

समीक्षमाणस्य च तस्य सम्मुखं वनेचरन्तः समपाहरन् स्त्रियः ।
चकार तेषां न च किञ्चिदप्रियं स्वरूपतो वेद तदा स शार्ङ्गिणम् ॥३९॥

सदैव कर्णो भगवत्प्रभावविद् बभूव चैतन्निगदन्ति सूरयः ।
द्वयोस्तु कुन्तीसुतयोर्यदन्तरं विदो महाभारतवेदिनो विदुः ॥४०॥

विधेर्विधिश्चेन्न यदा प्रतीपगोऽभविष्यदेतस्य वरीयसोऽर्जुनात् ।
सुरासुरेष्वप्यतुलो महायशा न चैकवीरोऽयमघातयिष्यत ॥४१॥

वदन्ति केचित्प्रबलं विधेर्बलं विपश्चितोऽन्ये पुरुषार्थमेव च ।
परेऽवगच्छन्त्युभयोः समानतामिहैकमत्यं सुधियो न बिभ्रते ॥४२॥

यथैकचक्रेण रथस्य नो गतिर्न चैकपक्षेण खगो विसर्पति ।
तथैव नूनं पुरुषार्थमन्तरा न भागधेयं हि फलाय कल्पते ॥४३॥

क्रिया च दिष्टं च परस्पराश्रिते दशा तदीया भुवि बीजवृक्षवत् ।
उभे त्विमे स्यन्दनरूपजीवन–प्रवाहसिद्ध्यै व्रजतः समानताम् ॥४४॥

गुरुक्रिया दैवबलानुसारिणी शिरोऽङ्कितं दैवमपि प्रबाधते ।
परन्तु भूमाविह पारमेश्वरं समीहितं व्यर्थयितुं क ईश्वरः ॥४५॥

अधर्मपक्षाश्रयणेन न ह्यसौ विपक्षभूतेन न माधवादिना ।
मृतोऽप्यदृष्टादमृतो धरातले स जीवितो यस्य जयन्ति कीर्तयः ॥४६॥

महोग्ररूपाश्रितपौरुषाग्रतो विधिप्रयुक्तं बत नग्ननर्तनम् ।
समीहते यश्च सुधीः समीक्षितुं स च ध्रुवं कर्णकथामृत पिबेत् ॥४७॥

स विश्वविश्वासजुषां पुरस्सरो धुरि स्थितो मानभृतां मनस्विनाम् ।
तपस्विनां शीर्षमणिर्यशस्विनां सतां मतः सूनृतसत्यवागपि ॥४८॥

निरस्तचन्द्रप्रसरद्गभस्तिभिः शिलासु चोत्कीर्णयशःप्रशस्तिभिः ।
नमद्रिपुव्रात उपेन्द्रविक्रमश्चिराय कर्णः स जयत्युदारधीः ॥४९॥

चरित्रवान् साधुगुणेषु यो महान् प्रलोभनग्रस्तमतिर्न चापि यः ।
अनेकशः कृष्णसुगीतसद्यशाः स एव भाग्यादधरीकृतो नृपः ॥५०॥

सुपर्वपुत्रोऽपि च सूतसम्भवो नरेन्द्रवंश्योऽपि च सारथिर्मतः ।
पराक्रमध्वस्तनृपेन्द्रमण्डलो महारथश्चार्धरथस्तु स स्मृतः ॥५१॥

स धृष्टबुद्धिर्गुरुभिः प्रदर्शितो विनम्रशीलो विनयी भवन्नपि ।
महात्मवांश्चापि दुरात्मतां गतः समस्तमेतद्धि विधेर्विडम्बितम् ॥५२॥

नरः कुलीनोऽपि च वीरपुङ्गवो विविक्तचित्तोऽपि च सत्यवाग्रतः ।
दृढव्रतो दानिशिरोमणिश्च वा स नैव दैवं समतीत्य वर्त्तते ॥५३॥

निजैः सुपूर्णैरवतारमंशकैः सुविश्रुतस्तस्य पयोधिजापतेः ।
गतिः स्वलोके तु निषादसायकादवश्यमेतद्धि विधेर्विजृम्भितम् ॥५४॥

स रामचन्द्रोऽपि परात्परो विभुर्न चाधिगत्य प्रभुणापि चार्पितम् ।
स्वयं स्वपित्रा प्रजया प्रजेश्वरैः स्वराज्यमागान्निजदिष्टतो वनम् ॥५५॥

पिशाच-विद्याधर-यक्ष-सिद्धकोरगेषु रक्षो-नर-किन्नरेषु वा ।
न कोऽपि देवेष्वसुरेषु वर्त्तते य ईश्वरः स्यात् स्वविधेरतिक्रमे ॥५६॥

न पापसंगेन न चैव विष्णुना विपक्षपक्षं श्रयता न जिष्णुना ।
अदृष्टयोगेन दिनेशनन्दनो हतोऽप्यगाद् विश्वजनैकवन्द्यताम् ॥५७॥

न ना हिरण्याक्ष-तदात्मबान्धव-प्रलम्ब-मारीच-समान-नामधृक् ।
नृशंसकंसस्य च रावणस्य वा सदृक्षसंज्ञो भुवने विलोक्यते ॥५८॥

न कन्यका शूर्पणखा च ताडका सदन्वयोपात्तजनुः समीक्ष्यते ।
निदानमस्त्यत्र तु पापमेव वै परन्तु कर्णस्य न तादृशी स्थितिः ॥५९॥

जगत्सु तत् कर्णपुरं सुविश्रुतं श्रुतं च कर्णैः किल कर्णनाम च ।
न चास्ति यः पञ्चमवेदवित्तमः स एव कर्णं नृपतिं विनिन्दति ॥६०॥

बुलन्दनाम्नो नगरस्य सन्निधौ चकास्ति तीर्थं खलु कर्णवासकम् ।
त्रिमार्गगायाः शुचिरोधसि स्थितं स यत्र कर्णः समुपास्तिमाचरत् ॥६१॥

पवित्र-तीर्थाश्रित-बादराश्रम-प्रयाण-मार्गोल्लसितं सुखाकरम् ।
प्रयागतीर्थं त्विह कर्णनामतोऽनवद्यमद्यापि निषेव्यते जनैः ॥६२॥

स्थलीयमास्ते नितरां सुखप्रदा तपोधनैर्या सततं समाश्रिता ।
इहैव भूमावलकादिनन्दया समीयते पावनकर्णगङ्गया ॥६३॥

नदीद्वयस्यास्य च यत्र सगमो विभाति कुण्डं शुचि कर्णनामकम् ।
महत्तपस्तत्र चचार सुव्रतस्तपोधनानामपि धुर्यतां गतः ॥६४॥

पुराण्यनेकानि च कर्णनामतो लसन्ति तीर्थानि मनोहराणि च ।
यशस्ततिस्तस्य भुवस्तले चिरं तदीयपित्रा सह वासमेष्यति ॥६५॥

स विग्रहे वीररसैकविग्रहोऽर्जुनेन कर्णो विनिपातितो यदा ।
सखायमादाय स विष्णुरर्जुनं परीक्षितुं तं म्रियमाणमागतः ॥६६॥

निजस्वरूपं सुनिगूह्य भास्वरं महीसुरत्वं भजमान ऐरयत् ।
श्रुतो मया दानिषु विश्रुतो भवान् प्रदीयतां स्वर्णमिहास्ति चेत्तव ॥६७॥

ततः स आरात् स्थितमश्मखण्डकं कथञ्चिदादाय च तेन सद्रदान् ।
निजान् समुत्पाट्य निगृह्य तद्गतं सुवर्णमस्मै विततार सुव्रतः ॥६८॥

तदा प्रसन्नः स च विष्टरश्रवाः स्वरूपमास्थाय पुनस्तमब्रवीत् ।
अहो नु भो दानिशिरोमणे ध्रुवं यथाभिलाषं वरमर्थयाऽधुना ॥६९॥

उवाच कर्णो मम चान्तिमक्षणे भवानभूद्दर्शनगोचरः स्वयम् ।
इतोऽधिकं किं वरणीयमस्ति मे यतो भवद्दर्शनमद्य मोक्षदम् ॥७०॥

चिराय सर्वे मुनयो महर्षयो गृणन्ति ते नाम विमुक्तिदं प्रभो ।
यतो भवानन्तिमकाल आगते स्मृतिं गतः स्यादपुनर्भवाय नः ॥७१॥

रणे हतो वीरगतिं गतस्तथा त्वमीश्वरो मेऽक्षिपथं समाश्रितः ।
वृणे किमन्यद् वरमात्मतुष्टये विमृश्य बुद्ध्याऽपि न वेद्म्यहं विभो ॥७२॥

तथाप्ययं तत्रभवन्निदेशनं विमानतां नेतुमहं न पारये ।
अतस्तवाग्रे विनये कृताञ्जलिर्ममाभिलाषो न भवेत् क्वचिद् वृथा ॥७३॥

त्वमेव देहं किल मामकं प्रभो गतासुमेतं भुवि भस्मसात् कुरु ।
सुरासुराणां च मनुष्यरक्षसां न यत्र दाहः प्रबभूव कस्यचित् ॥७४॥

निशम्य कर्णस्य वचस्तदीदृशं न चाधिगत्य स्थलमत्र तादृशम् ।
तदर्हणीयं शवमात्मनः करे निधाय कृष्णः प्रददाह सादरम् ॥७५॥

स्वपुण्यतो विष्णुपदे चितिं श्रितः सुसंस्कृतो निर्वृतिमेति चेत्तदा ।
कराब्जमारोप्य ददाह यं प्रभुर्न तस्य मुक्तावणुमात्रसंशयः ॥७६॥

तिरोहिते चात्र जनार्दने विभौ सबान्धवः शोकपयोध्युपप्लुतः ।
धनञ्जयो मृत्युमवाप यादृशं स कस्य विज्ञातचरो न वर्तते ॥७७॥

लोके यद्वदिहान्तरं निगदितं सर्वत्र सूर्येन्द्रयो-
स्तद्वत् तत्सुतयोश्च सम्भवमिति स्वाभाविकं विद्यते ।
यद् गीतं चरितं यथार्थमसकृत् कर्णार्जुनीयं हि तद्
व्यासेन प्रभुणा प्रदत्तसरणि-र्वक्ष्येऽनुरूपं मतेः ॥ ७८ ॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये प्रथमः सर्गः समाप्तः

—❀:०:❀—

## अथ द्वितीयः सर्गः

शूरसेननृपतिः स्वतेजसा विश्रुतः समभवद् यदोः कुले ।
तस्य निर्मलसुधाकरानना मारिषाऽऽस महिषी पतिव्रता ॥ १ ॥

एतयोर्दश सुताश्च कन्यकाः पञ्च शुभ्रयशसः प्रजज्ञिरे ।
आत्मजेषु वसुदेव उत्तमः कन्यकासु च पृथा गरीयसी ॥ २ ॥

तस्य वीरनृपतेः पितुः स्वसुः कुन्तिभोज इति नाम भूपतिः ।
संबभूव तनयोऽनपत्यकस्तेन नैजतनुजा पृथा कृता ॥ ३ ॥

भ्रातृषु स्वभगिनीषु चापि वा ज्यायसी तु समभूत् पृथाऽभिधा ।
कुन्तिभोजपितरं समाश्रिता कुन्तिकेत्यपि दधार नाम सा ॥ ४ ॥

सर्वसौम्यगुणराशिसंयुतां कन्यकां स समवाप्य शोभनाम् ।
भार्यया निजजनैश्च संयुतः कुन्तिभोजनृप आददे मुदम् ॥ ५ ॥

ह्रेपित-स्ववदनोल्लसच्छटा–शारदीय-वर-शर्वरीश्वरी ।
वृद्धिमाप जनकेन सा यदा संन्ययोज्यतिथिसत्कृतौ तदा ॥ ६ ॥

सन्ततेस्तु हितकाम्यया पुरा मातरश्च पितरश्च वत्सलाः ।
आतिथेयपरमार्थकर्मसु प्राक्तना निजसुता न्ययुञ्जत ॥ ७ ॥

भूतभव्यपरिदर्शिनो मताः साधवो वदरवत् समं जगत् ।
लोकयन्ति निजसत्तपस्यया दुष्टदिष्टमपि कुर्वतेऽन्यथा ॥ ८ ॥

नास्ति पुण्यमतिथेः समर्चनादन्यदित्थमवधार्य भूपतिः ।
प्रेयसीं स्वतनयां पृथामिमामार्पिपत्तदनवद्यकर्मणि ॥ ९ ॥

कुन्तिकाऽपि नृपसद्मसंगतानादरेण महताऽतिथीन् निजान् ।
पर्यपूपुजदनन्यमानसा भक्तिभावितहृदा मुदाऽन्विता ॥१०॥

एवमेव नृपतेस्तनूजया स्वातिथेस्तु तिथयः सपर्यया ।
स्वार्थशून्यमनसाऽतिशान्तया यापिता बहुतिथा निरन्तरम् ॥ ११ ॥

एकदा तु भवितव्यतावशाद् राजगेहमृषिराडटाह्वया ।
आग्रहग्रहिलमन्युविग्रहः प्राप दूष्यवसनस्तपोधनः ॥ १२ ॥

तं मुनिं समवलोक्य हन्त दुर्वाससं च सचिवाः शशङ्किरे ।
मारिषाप्रभृतयो नृपस्त्रियोऽमङ्गलागमभिया चकम्पिरे ॥ १३ ॥

प्राससाद विषसाद चाप्यसौ भूपतिस्तु समकालमात्मनि ।
प्राससाद स ऋषेः समागमान्मन्युतोऽस्य विषसाद शापतः ॥ १४ ॥

अर्चनं स मधुपर्कमिश्रितं संविधाय नृपतिः कृताञ्जलिः ।
अब्रवीदयि मुनीन्द्र किन्त्वया निःस्पृहेण मम सद्म पावितम् ॥१५॥

प्रत्युवाच मुनिनायकोऽप्यसौ प्राञ्जलिं मनुजनायकं त्विदम् ।
अब्दमेकमहमत्र ते गृहे वस्तुमस्मि कृतधीः समागतः ॥१६॥

तन्निशम्य वचनं महामुनेर्भूपतिस्तु परिशङ्कितोऽप्ययम् ।
प्रोक्तवानयि महर्षिसत्तम स्वागतं सविनयं ब्रवीमि ते ॥१७॥

मादृशोऽस्ति न हि कोऽपि भाग्यवांस्तिग्मरश्मिमिव भास्वरप्रभम् ।
त्वादृशं त्रिभुवनेषु विश्रुतं प्राप्तवान् यदतिथिं तपोनिधिम् ॥१८॥

अत्यवर्षणविपन्नमानसो दीर्घकालतृषितस्तु चातकः ।
अम्बुवाड्विरहिताद् विहायसः स्वातिकाम्बुवरबिन्दुमाप्तवान् ॥१९॥

निर्जरादिभिरचिन्त्यवैभवस्तापसोत्तमभवादृशोऽतिथिः ।
न ह्यकारणमये महीभुजः सद्म कस्यचिदिहोपढौकते ॥२०॥

स्वार्थसाधनमनेन देहिना निःस्पृहस्य भवतो न किञ्चन ।
त्वं तु दीनमुपकर्तुमागतः सन्त्युदीर्णतपसो दयालवः ॥२१॥

राजकीयमचलं चलं च यद् वस्तु सौख्यजनकं मम ध्रुवम् ।
वेदनीयमखिलं तदात्मनोऽधीनमत्रभवता हितैषिणा ॥२२॥

आतिथेयनिलयं तपोधनं संगमय्य निखिलर्तुसौख्यदम् ।
आसने समुपवेश्य शोभने प्राविशत् स निजमन्तरालयम् ॥२३॥

आजुहाव च जगाद पार्थिवस्तां पृथां वररुचा प्रथीयसीम् ।
भीषणस्य तु परीक्षणस्य ते पुत्रि हन्त समयः समागतः ॥२४॥

आगमन्मम गृहेऽद्य सोऽतिथिर्योऽस्ति मूर्त्तिरिव मन्युशापयोः ।
तं प्रसन्नवदनं न कोऽपि ना कोपिनं वत ददर्श भूतले ॥२५॥

स्वल्पहेतुवशतोऽपि कर्हिचित् कोपनः स विकृतिं गतस्तदा ।
बालयापि नतभालया त्वया नैव शान्त्वयितुमेष पार्यते ॥२६॥

श्वः परश्च इह वासरानसौ पञ्चषानपि न वस्तुमागतः ।
यापयिष्यति वतैकहायनं तेन पुत्रि मम हृत्प्रकम्पते ॥२७॥

मा विषीदतु भवान् स्वसेवया तं मुनिं ध्रुवमहं प्रसादये ।
ईदृशीं गिरमुदैरयत्पृथा शान्तिमाप धरणीपतिस्तदा ॥२८॥

तामृषेः पदसरोजमानयन् सादरं च नतिपूर्वमर्पयन् ।
स्थापयञ्छिरसि नैजमञ्जलिं भक्तिविह्वलमना अभाषत ॥२९॥

हे मुने त्वियमबोधबालिकास्त्यागता तव निदेशपालिका ।
ह्रस्वचञ्चदलका कनीनिका नेत्रयोर्मम तथा श्रियश्च मे ॥३०॥

चेत्प्रमादमपि कञ्चनाचरेदातिथेयभवदर्चने विधौ ।
क्षान्तिमर्हति तपोधनस्य ते सन्मनांस्यतिमृदूनि सन्ति हि ॥३१॥

क्ष्माभृता तु वचनं यदीरितं स्वाङ्गितेन मुनिना समर्थितम् ।
सनियुज्य ऋषिसत्कृतौ पृथां प्रस्थितः स्वनिलयं महीपतिः ॥३२॥

नव्यभव्यनवनीतकोमला कुन्तिभोजतनया यशस्विनी ।
आतिथेयकठिनक्रियास्वियं व्यापृताऽऽस्त सुमतिर्मनस्विनी ॥३३॥

भूतले न हि जगत्त्रयेऽपि यः सर्वलोकविदितो विषद्रुमः ।
कुन्तिकार्थममृतोपमं फलं दास्यतीति क इहानुमन्यते ॥३४॥

एष्यदद्भुत-विपत्सहिष्णुता—शिक्षणाय भरतान्वयस्य च ।
रक्षणाय मुनिपुङ्गवः स्वयम् आतिथेयमिषतः समागतः ॥३५॥

तद्दिनादृषिवरः कठोरवाग्वज्रमेव सततं विनिक्षिपन् ।
तां परीक्षितुमनेकरूपतो व्यापृतोऽभवदसौ नृपात्मजाम् ॥३६॥

अर्चने च सवने निरन्तरं भोजने च शयनेऽन्यकर्मणि ।
दोषमेव परिदर्शयन् मुनिः क्रोधकम्पिततनूरदृश्यत ॥३७॥

यद्यदादिशति तत्तदेव सा प्रेरितेव तडितोऽतिरंहसा ।
पर्यपूरयदियं सदा वशंवादिनी नृपतिकन्यका द्रुतम् ॥३८॥

हन्त तादृशसपर्यया दृषच्चेद् यदा परिदधाति विद्रुतिम् ।
कोमलं सुपिशितासृगुद्गतं तत् तपस्विहृदयं न किं द्रवेत् ॥३९॥

जातमद्य हि खपुष्पदर्शनं पश्चिमे समुदितो दिनेश्वरः ।
शश्यभृङ्गमपि दृश्यतां गतं क्रोधनास्यमभजत् प्रसन्नताम् ॥४०॥

स त्रिकालविदनन्तबोधधृग् दृष्टवान् स्वसुसमाधिमास्थितः ।
सन्ततिर्न च जनिष्यतेऽनया शापभृन्निजपतेः समागमात् ॥४१॥

भूप्रशस्तधनधान्यसम्पदां भोग आत्मसुखसाधनं च यत् ।
तत्समस्तमपि पुत्रजन्मतस्तुच्छमेव गणयन्ति मातरः ॥४२॥

इत्यवेत्य मुनिना प्रसीदता व्याहृता वरय शोभने वरम् ।
पुत्रि तेऽस्त्यभिमतं च यद् ध्रुवं दास्यते तव मनोरथाप्तये ॥४३॥

कुलप्रसत्तिरपि जातु नैव मे बन्ध्यतां हि भजतो नृपात्मजे ।
श्रद्धया च सुविविक्तया त्वया मन्त्र एष मम दत्त आप्यताम् ॥४४॥

एतदद्भुतमनोः प्रसादतः काम्यमान उपढौकतेऽमरः ।
पुत्ररत्नमपि तेन पुत्रिके प्राप्स्यसीति न हि मे वचो वृथा ॥४५॥

मन्त्रराजमुपदिश्य निर्गते दुष्यवासससि महर्षिपुङ्गवे ।
बाल्यभावत इमं परीक्षितुं कौतुकान्वितमनाः पृथाऽभवत् ॥४६॥

शैत्यशोभन ऋतौ समुद्गतं तिग्मरश्मिमचलैकदीपकम् ।

मन्त्रराजसुपरीक्षणाय सा बालधीरपरिहार्यनिश्चया ।
आस्थिता च परिशुद्धमासनं ध्यानमग्नमनसाऽऽह्वयद् रविम् ॥४८॥

तत्क्षणात् परमकान्तविग्रहः कश्चिदद्भुतवपुर्नराकृतिः ।
प्रादुरास सहसा तदन्तिके साऽभवत्तमवलोक्य विस्मिता ॥४९॥

वासरेश्वरमुपस्थितं पुरो वीक्ष्य सा सरभसं ह्रियाऽन्विता ।
कुड्मलीकृतकराम्बुजा निजात् कुन्तिका समुदतिष्ठदासनात् ॥५०॥

व्याजहार विनयान्नतानना कम्पिताङ्गलतिकाऽतिबिभ्यती ।
क्षम्यतामयि महामहोनिधे दोष एष मम बाल्यचापलाद् ॥५१॥

अन्तरात्मद्दगये त्वदागमाऽभ्यर्थने मम कदापि कुत्सिता ।
भावना न हि मनागपि प्रभो वर्तते सशपथं ब्रवीमि ते ॥५२॥

नूनमत्रभवतः समागमान्नङ्क्ष्यति प्रियकुमारिकाव्रतम् ।
उद्भवेदपि कलङ्क ईदृशः स्याद् यतो मम मृतिर्वरीयसी ॥५३॥

सर्वमेतदयि वीक्ष्य चेतसा त्वं दयानिधिरुदात्तभावनः ।
धाम नैजमभिगच्छ हे विभो त्वत्पदाब्जमनघं समाश्रये ॥५४॥

आर्तभाषितमिदं हि कौन्तिकं संनिशम्य दिनकृत् स सस्मितम् ।
अब्रवीदखिललोकनायको दायकोऽतुलितसौख्यसम्पदाम् ॥५५॥

राजपुत्रि जनयित्रि नाकिनां भीतिरस्तु न तवान्तरात्मनि ।
मामको भवति पूतमानवीभागधेयजनितः समागमः ॥५६॥

मत्प्रसादमधिगत्य वन्द्यतां त्वं गमिष्यसि किलाजगत्स्थितेः ।
एनसामपि महामहीयसां स्यात् प्रहर्तृ तव नामधेयकम् ॥५७॥

नाशमेष्यति न ते कुमारिकाभाव इत्यपि वचो न मेऽनृतम् ।
सन्त्यघव्यघटनापटीयसां मादृशां न हि सदुक्तयो वृथा ॥५८॥

कुन्ति राजतनये मयेरितां नैव वाचमुररीकरिष्यसे।
मातरं च पितरं च मन्त्रदं शापतः सपदि भस्मतां नये ॥५९॥

स्पर्शमात्रसुविलुप्तचेतना संबभूव नृपकन्यका यदा।
स्वांशमाशु च तदीयकुक्षिगं योगशक्तिमवलम्ब्य स व्यधात् ॥६०॥

प्रस्थिते च निजधाम भास्करे चेतनत्वमधिगत्य सा पुनः।
स्वं वपुस्तु निजतल्पमास्थितं संददर्श नृपजा तपस्विनी ॥६१॥

वासरेषु च गतेषु केषुचिद् गर्भलक्षणमपूर्वमद्भुतम्।
साऽन्वभूदथ रहस्यमात्मनो धात्रिकामपि च पर्यवेदयत् ।६२॥

मातृका त्वमसि, नैव धात्रिका दुःखसिन्धुशरणप्रदात्रिका।
यद् रहस्यमिदमम्ब तेऽभ्यधाम् गोपनीयमनिशं प्रयत्नतः ॥६३॥

मा विषीद नृपकन्यके भिया यत् त्वयोक्तमनघे ममाधुना।
प्राणदानपणतोऽपि गोपये मङ्गलं तव सदैव साधये ॥६४॥

अचिलक्ष्यमदसीयमान्तरं गर्भचिह्नमभवद् यदा तदा।
मातृसौधगमनं च यत्नतः संन्यरोधि हितचिन्तया तया ॥६५॥

येषु येष्वपि च वस्तुषु प्रभोरात्मजा प्रभवति स्पृहावती।
तानि तानि निखिलानि चैतया सञ्चितानि च हितानि पूर्वतः ॥६६॥

रम्यभाद्रपदमासि संगते मन्दमन्दमभिवर्षति क्षितौ।
सद्रवेऽम्बुधरमण्डलेऽद्भुतं पुत्ररत्नमसकावजीजनत् ॥६७॥

किं स्विदेष रविरस्ति चापरः सञ्चयश्च तपसां त्विषामपि।
पावकोऽस्त्यथ महानुभावको निश्चिकाय न च तं नृपात्मजा ॥६८॥

सूतिकागृहमियं स्वरोकसा पूरयन्तमखिलं निजौजसा।

सर्वसुन्दरतमस्य वस्तुनः सौम्यसारमपकृष्य वेधसा ।
निर्मितः शिशुरिति स्म मन्यते भूमिनाथतनया सधात्रिका ॥७०॥

वक्षसस्तु परिरक्षकं समं जन्मनैव कवचं समुद्गतम् ।
सा विलोक्य सहजे च कुण्डले विस्मयाम्बुधिनिमज्जिताऽभवत् ॥७१॥

पूर्णचन्द्रमिव यादसां पतिः प्रोच्छलद्वरतरङ्गमालिकः ।
स्वात्मजाननमवेक्ष्य तन्मनो मोदपूरमदधान्न चात्मनि ॥७२॥

यह्यचिन्तयदसौ तु यन्मया दत्तमस्ति जनुरस्य कन्यया ।
रामतीक्ष्णशरविद्धसिन्धुवत् तन्मनोऽपि च मरुस्थलायितम् ॥७३॥

लोकजन्यमपवादमात्मनो मृत्युतोऽपि च वरं विजानती ।
शोकसागरनिमग्नमानसा मूर्च्छयाऽऽशु निपपात भूतले ॥७४॥

बोधमाप्य शिशिरोपचारतो रुद्धकण्ठमतिशोकवाष्पतः ।
प्राह मेऽम्ब कथयस्व धात्रिके किं विधेयमधुना मया निशि ॥७५॥

धात्रिका प्रतिजगाद वत्सला राजपुत्रि भज मा विषण्णताम् ।
सर्वजीवनिवहस्य निश्चितं भाग्यमेव बलवत्तरं सदा ॥७६॥

नाथहीनविपिने विसर्जितो जीवतीह ससुखं स्तनन्धयः ।
यत्नतोऽपि परिरक्षितो गृहे नाथवत्यपि न चैव जीवति ॥७७॥

यातिरम्यवरदारुपेटिका सर्वतोऽपि च विपन्निवारिका ।
वायुसेवनसुवृत्तरन्ध्रिका वाःप्रवाहदिशमेव गन्त्रिका ॥७८॥

यां निरीक्ष्य परितोऽतिभीषणा विद्रवन्ति विविधा जलौकसः ।
यत्र बिन्दुरपि नैति बाह्यतः सा मयाऽत्र विरचय्य रक्षिता ॥७९॥

पेटिका वत निरैक्षि चैतया पूर्णशोकजलधौ न्यमज्ज्यत ।
अश्रुबिन्दुभिरुपेत्य संहतिं प्रावृडम्बुधर एधितो भृशम् ॥८०॥

अक्षतांश्च दधिकुङ्कुमान्वितान् दूर्वया च सहितान् न्यवेशयत् ।
कोमलास्तरणकं च विस्तृतं सा चकार शिशुमङ्गलैषिणी ॥८१॥

पेटिकान्तरमसावशाययन्नैजममृतपयोऽप्यपाययत् ।
तं सरिज्जलतरङ्गमानयत् क्लेशकम्पितकरा व्यसर्जयत् ॥८२॥

हे विश्वात्मन् मम मनसि चेदेनसो नैव लेशो
जातस्त्यक्तः स च जनभिया यत्र यायात्प्रसीदेत् ।
सेत्युक्त्वाऽऽयात् सततगतिकप्रातिकूल्यं गतस्य
क्षौमं केतोरिव निजसुत चान्वगाच्चित्तमस्याः ॥ ८३ ॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये द्वितीयः सर्गः समाप्तः

—❀:०:❀—

## अथ तृतीयः सर्गः

अश्वाह्वया सरिदियं न तथा गभीरा वर्षर्तुयोगमधिगत्य तरङ्गिताङ्गी ।
मञ्जूषया सह तया च समुह्यमानो बालः स दीर्घतनुचम्बलसंगतोऽभूत् १

चण्डा च चम्बलनदी परितोऽतिदीर्घा चञ्चत्प्रवाहमनिशं निजमादधाना ।
सिञ्चन्त्यनेकविधभूमिमसाविटावासान्निध्यमेत्य भजते रविनन्दिनीं ताम् २

बालोऽपि वेगमनुकूलमुपेत्य वायोर्मात्राऽपवादभयमाप्य विसर्जितोऽपि ।
दिष्ट्या निदिष्ट इव दिष्टवशात् स्वपित्रा स्वीयाग्रजाङ्कशरणं तरणं प्रपन्नः ३

कालिन्दि ! नूनमसि यत्प्रवरा सपत्नी नैजे बिभर्षि हृदयेऽपरकान्तकृष्णाम् ।
शप्तास्यतोऽसिततनुर्वृषभानुपुत्र्या किंवा यमस्य भगिनीति विभासि कृष्णा ४

कृष्णासि यद्यपि च ते चरितं न कृष्णं पापात्मनां त्वयि निमज्जनमात्रतश्च ।
प्रक्षाल्य पापनिवहं भुवितान्विशुद्धान्सद्योविधाय विदधासि विमुक्तियोग्यान्

उत्सङ्गमिद्धमकुतोभयमेत्य तस्या बालो मरालविमलः स विशालभालः ।
देवर्षिभिश्च मुनिभिश्च महर्षिभिश्च शश्वन्निषेवितटीमभजत् त्रिवेणीम् ॥६॥

देवापगायमनधर्मसहोदरोद्यत्–कल्लोलदोलितसितासितचामराभ्याम् ।
यो वीज्यतेऽक्षयवटोऽपि जगद्वरेण्यं नीलातपत्रमिह यस्य स तीर्थराजः॥७

कर्मस्वरूपमनघं समुपासनं च ज्ञानेन मुक्तिजनकेन सुसंगतं सत् ।
एकीभवत् त्रयमिदं परमे चिदब्धौ सम्पद्यते विलयमस्य गुरोः प्रभावात्॥८

सोमस्य चाक्षयवटस्य च वासुकेश्च शेषस्य भूमहिततीर्थपतेस्त्रिवेण्याः ।
श्रीमाधवस्य च मुनेरपि बालकोऽसावायुष्यशम्बलमवाप्य पुनः प्रतस्थे ॥९

विन्ध्यं गिरिं पुनरसावुपढौकमानोमानोन्नतं प्रणमनीयविशालकायम् ।
आवर्त्तमानवरवीचिविव त्तिताङ्गः कुर्वन् प्रदक्षिणमिवैष शिशुर्जगाम ॥१०॥

विष्वक्प्रवृद्ध-परमार्हित-तुङ्गसानुर्यः संबभूव परिरुद्धसहस्रभानुः ।
किन्त्वागतं गुरुमवेक्ष्य समानतः सन्नद्यापि पालयति स स्वगुरोर्निदेशम्॥

शुम्भं निशुम्भमपि दुर्दमनीयदैत्यान् हत्वा करोति जगतः परिपालनं या ।
विन्ध्याचलाश्रितवपुर्जगदम्बिका सा धर्मे दृढत्वमनुशास्ति शिशुं समेतम् ॥

यो भारतीयशुचिसंस्कृतिरक्षकाणामायोधनप्रथितकीर्त्तिजुषां नृपाणाम् ।
सेनानिवेशदृढदुर्गसहायकोऽभूत् तं दर्शनीयचरणाद्रिगिरिं स भेजे ॥

तेनाऽभिनन्दित उपेत्य स दूरमल्पं श्रीविश्वनाथनगरे वसतां द्विजानाम्।
शुश्राव तद् वरमनादिवचः श्रुतीनां यत् कर्णयोश्च मनसश्च रसायनं सत् ॥

काशीं समाश्रयदसौ त्रिजगत्प्रसिद्धां सिद्धैः सदैव विबुधैश्च निषेविताङ्काम् ।
यस्यां स जन्तुनिवहं म्रियमाणमेत्य शम्भुर्मुदादिशति तारकमन्त्रराजम्॥

काशी गिरीशतनयाऽप्यथ जाह्नवी च श्रेयस्य उग्रवपुषो विलसन्ति तिस्रः ।
काश्यां विशेषमनुरक्तइहास्ति शम्भुर्नैवान्ययोः प्रणयवान् किल तादृशोऽसौ॥

एषा सदा शिवसमानसुतान् प्रसूते भालेन्दुकण्ठगरलाहिधरांस्त्रिनेत्रान् ।
काश्येव भूधरसुता मुनिकन्यका तु सूनुं गजास्यमथवा च षडास्यमेव ॥

मेषो वकश्च मशकः शशकः पुराऽहं मत्स्यो वृषश्च कमठश्च खगो मृगश्च ।
पञ्चाननास्त्रिनयना बहवोऽत्र रुद्रा नव्याः परस्परमिमां गिरमुद्गिरन्ति ॥

वाराणसी निविशते न वसुन्धरायामित्थं वचः सुसमधीत्य सपुत्रपत्नीम् ।
विक्रीय पक्कणपतौ च तथात्मदेहमानृण्यमाप नृपतिः सहरिः स चन्द्रः ॥

यत्राम्बु निन्दति सुधां विबुधैकसेव्यां निःस्वोऽपि
चान्त्यजजनोऽधिपतिं सुराणाम् ।
चिन्तामणिं स शकलोऽपि सदोपलस्य कः स्यात्प्रभुर्निगदितुं
भुवि तन्महत्त्वम् ॥२०॥

रिङ्गत्तरङ्गततिभिश्च शुभंयुमञ्जु-मञ्जूषयाऽऽगतशिशुं तमवेक्ष्य काशी ।
भेरीमृदङ्गपणवानकघर्घराश्वद्घण्टानिनादमिषतोऽस्य शुभं जुघोष ॥२१॥

वानीरवत्सुखदतीरसमीरदीव्यत्-पीयूषहारिरसधारिगभीरनीरा ।
सन्मानसोद्गतबृहद्रमणीयधारा द्वारादुव्यलङ्घि सरयू शिशुनाऽमुना सा॥

प्रातर्नमस्यचरितांशुमदाद्यनेकैर्मान्धातृवीरयुवनाश्वककुत्स्थसंज्ञैः ।
राजर्षिभिश्च मुनिसिंहवसिष्ठमुख्यैर्या सेविता सततमेव सुरासुरैश्च ॥२३॥

सद्बन्धुभिश्च सहितस्य हितस्य तस्य रामस्य चापि दशकण्ठकुलद्विषश्च ।
क्रीडास्थली सरिदियं सह गङ्गयैक्यं भेजे शिशुः स किल तत्र समाजगाम

विन्ध्याद्रिनिर्गततनुश्च सुवर्णभूमिर्यो गैरिकाम्बुवसनं सततं वसानः ।
देवापगां विशति यत्र स शोणभद्रस्तं देशमेत्य स मुदं परमामवाप ॥२५

तस्माददूरमतिपावनमद्भुतं तत् सारण्यभूषणसुवर्णपुरं च यत्र ।
क्षेत्रं परं हरिहराभिधमस्ति पुण्यं यच्छैववैष्णवसमानसमादृतं हि ॥२६।

एका ध्रुवं प्रकृतिरस्ति हरेर्हरस्य तौ प्रत्ययान्तरवशेन विभिन्नरूपौ ।
ऐक्यं तयोरिह स वेत्ति सुधीश्वरो यो मूढस्तु तद्विषयकं कुरुते विवादम् ॥

अत्रैव धामनि मुनिर्भरतश्चरित्वा तीव्रं तपोऽन्यजनने जडतां गतोऽभूत् ।
यं प्राप्य सद्गुरुवरं हि रहूगणोऽसौ लेभे विमुक्तिमिति भागवते प्रसिद्धम्॥२८

वेश्या त्रिलोकविदिता किल गण्डकीति नाम्ना बभूव नियमे सुदृढा च सत्ये
नारायणेन सुपरीक्षणसङ्गताऽभूत् सृष्टौ पुरेत्विति पुराणविदोवदन्ति ॥२९

उत्तीर्णतामुपगता सुपरीक्षणे सा श्रीविष्णुना प्रमुदितेन वरं वृणीष्व ।
आज्ञापिता विनयबद्धकरा ययाचे त्वत्तः कदापि विरहो न भवेन्मदीयः ॥३०

अङ्गीकृतं भगवता वचनं तदीयमुक्ता च भामिनि मया सह संगतिस्ते ।
सर्गेऽग्रिमेकिलभविष्यति साम्प्रतं तु कालोऽचिराय विलयस्य समागतोऽस्ति॥

प्राप्ते लये सुखसुषुप्तिसमुत्थितेन वाराहनाम्नि विधिना परिसृज्यमाने ।
कल्पेऽत्र पुण्यसरितोह्यधिदैवरूपा सैवाभवत् सकलवारवधूवरेण्या ॥३२॥

तस्मादिहैव सरिति प्रबभूव शालग्रामाभिधा शुचिशिला मसृणाऽतिरम्या ।
यस्यां निवासमनिशं विदधाति विष्णुरावाहनं च परिहृत्य विसर्जनं च ३३

नारायणीति च तथैव दृषद्वतीति श्रीगण्डकीति च भवत्यभिधानमस्याः ।
एषाऽपि तद्धरिहराभिधधाम्नि गङ्गांसंगच्छते रुचिरदृश्यमिदं विलोक्यम्३४

सद्यत्नसंरचितपञ्जरिकानिलीनः श्रीराजहंसवदसौ प्रतिभासमानः ।
तत्रत्यवायुममृतं सुनिपीय पीनोहीनोऽभवत् किमपि चाध्वपरिश्रमेण ॥३५

अग्रेसरन्नुपससाद स रम्यरूपो भूपोत्तमैश्च सततं विबुधाग्रगण्यैः ।
संसेवितं प्रथितपुष्पपुरं समृद्धं रत्नाकरार्हितमहत्त्वनिदर्शकं सत् ॥३६॥

प्रोद्यत्प्रतापनिधिराजसमूहपुष्टं जुष्टं जगद्विजयिभिश्च सुधीप्रकाण्डैः ।
सौमित्रिमातृकुलसेवितमेतदासीदत्रैव चास जमदग्निसुताश्रमोऽपि । ३७॥

पूर्वं धरागतिरिहैव विकासिताऽभूदाविष्कृता च परमाद्भुतराजनीतिः ।
अत्रैवपुष्टिमगमच्च कवित्वशक्तिः सा व्याकृतिश्च परमोत्तमजन्म लेभे ३८

न्यायश्च नव्य उतवा स पुरातनोऽपि जन्माधिगत्य विससार समस्तभूमौ ।
अत्रैव वृद्धिमगमत्स दयासमुद्रो देशिकाश्च विजिता नृवरैरिहत्यैः ॥३६

ऐतिह्यविश्रुतचरं प्रथितं जगत्यामूर्जस्वि रम्यतमपाटलिपुत्रमेतत् ।
बालः क्रमेण समतीत्य पुरः प्रसर्पन्नङ्गप्रदेशशुभसीम्नि समाविवेश ॥४०॥

अङ्गस्य चास्य विदिता भुवि राजधानी चम्पाभिधाननगरी नगरीश्वरीव ।
तस्याः पतिर्ह्यधिरथः प्रियभार्ययाऽसौ राधाख्यया सह तथा निजसेवकैश्च॥

क्रीडां तरङ्गततिभिः किल कुर्वतीव मञ्जूषिकाऽतिशयमञ्जुकलाऽन्वितैका ।
आयाति चेति चकितः स समालुलोके गङ्गावगाहरसिको हि समागतःसन्

साश्चर्यमैक्षत नृपः स सतृष्णनेत्रमाज्ञापयच्च निजसेवकवर्गमेषा ।
आनीयतां सपदि तत्र किमस्ति वस्तु पश्यामि येन मम कौतुकशान्तिरस्तु४२

तस्याज्ञया तरणिकामधिरुह्य तूर्णं मञ्जूषिकानयनकामनया समेतैः ।
प्रस्थाय तैरियमनायि च तीरदेशं प्रादायि भूमिपतयेऽद्भुतपेटिका सा॥४४

उद्घाट्य तामधिरथेन निरीक्षि चैको बालो मृणालवरतन्तुसमानगौरः ।
बालार्कवत् स्वमहसा स च पेटिकान्तर्ध्वान्तं नितान्तरमणीयवपुर्निरस्यन्४५

सद्योजनुर्बृहदुरा अपि कम्बुकण्ठः स्वाभाविकं कवचकुण्डमादधानः ।
लावण्यवारिधिरलौकिकदिव्यमूर्त्तिर्म्लानः क्षुधाऽस्तिहिमपातहतः शशीव ॥

युक्तः श्रिया खलु स सन्ततिहीनदीनो दृष्ट्वा मुदाशिशुमुदञ्चितसर्वगात्रः ।
राधाऽपि वञ्चिततनूजसुखाप्तमोदा जाता प्रफुल्लितमुखी परिरभ्य दोर्भ्याम्४७

वक्षोजलब्धसुतसंगवशेन सद्यः सा प्रस्नुतस्तनयुगा समभूत् प्रसह्य ।
प्रीत्याङ्कमाविशति सौम्यशिशौ प्रकृत्यामातुस्तनौ विकिरतः किल दुग्धधाराम्

प्रायो दिनद्वयबुभुक्षितबालकोऽसौ   पीयूषवन्मधुरमातृपयो निपीय ।
मोमुद्यमानमनसा सहसा तदङ्के शोकं समाप सुखमाप च  निर्विशङ्के ॥४९॥

देवापगाजलनिमज्जनपूतदेहं गेहं निनाय स च भूमिपतिः सभार्यः ।
स्वस्त्यादिमाङ्गलिककर्म विधाय विद्भ्यो धेनूः सहस्रमपि संप्रददे सवत्साः ॥५०

चम्पापुरे   विविधरूपमहोत्सवानां   हर्षप्रकर्षवरवर्षणकारकाणाम् ।
आलोकशब्दमपि तस्य विलोकनेन लोकाः शिशोः समवदंश्च समे समेताः

दिव्यं च तत् कवचकुण्डलमात्मजाय माताऽदितिः प्रमुदिता दिवसाधिपाय
व्यश्राणयत्त्वमृतवर्षि दिनेश्वरेण  कर्णाय दत्तमधिगर्भमिदं प्रसन्नः ॥५२॥

यावद् द्वयं लसति तस्य शरीरलग्नं तावन्न कोऽपि विनिहन्तुमिमं समर्थः ।
इत्यादिशन् विधिविधानबुधास्तदीयं चक्रुश्च नाम वसुषेणइतिप्रसिद्धम्॥५३

यत्रैव यान्ति नरवेश्मनि भाग्यवन्तस्तत्रैव  सर्वविधमङ्गलमाविरस्ति ।
कर्णागतावधिरथस्तु बहून् सुपुत्रानेकैकशो ह्यजनयद् गुणिनो गुणज्ञान् ५४

राधा तथा ह्यधिरथोऽपि च दम्पती द्वौ कर्णाय संस्पृहयतोऽधिकमर्भकेषु ।
अभ्यर्हणीयगुणिनां गणनाप्रसङ्गे श्रेष्ठः स एव पितरौ भुवि येन धन्यौ ५५

वीरस्वभावसुविलक्षणबुद्धियुक्तो   विप्रप्रियोऽस्त्यमितदानिशिरोमणिश्च ।
दीप्त्येकधामदिनकृत्समुपासकोऽसौ सत्यप्रतिज्ञ ऋतवागपि सच्चरित्रः ॥५६

आजानुबाहुररुणाम्बुजपत्रनेत्रः श्रीमानुदारविपुलांसकगूढजत्रुः ।
सिंहोरुकन्धरधरः शुभलक्षणाढ्यः कैशोरकस्य वयसः स समीपमागात् ५७

तस्यप्रशिक्षणविधौ नृपतिश्च राज्ञी चिन्ताशतेन  नितरामनुतापमाप्तौ ।
तावेव चात्र भुवने पितरौ मतौस्तो यद्यत्नतो हि गुणधाम भवेत्तनूजः ५८

अङ्गः स चास्तिकुरुजाङ्गलदेशमित्रं तस्यप्रियो हितकरो धृतराष्ट्र आसीत् ।
इत्थंविचिन्त्यचनिजेहृदि दम्पतीभ्यां प्रस्थापितो निजसुतो नगरींगजाख्याम्॥

सुविख्यातं चासीदधिभुवनमेतद्धि नगरं
ककुब्भ्यो यत्रैताः प्रसृमरयशोराजतनयाः ।
सहस्रं शिक्षन्ते रणविजयविद्या बहुविधा
धनुर्वेदं साङ्गं पठितुमुपतस्थावयमपि ॥६०॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये तृतीयः सर्गः समाप्तः

—:o:—

## अथ चतुर्थः सर्गः

दुष्यन्तनाम्नो नृपतेर्यशस्वी शकुन्तलायां भरतो नरेन्द्रः ।
अभूत् पुरा यः शरवर्षदेश्यः शार्दूलदंष्ट्रां गणयाञ्चकार ॥ १ ॥

महाप्रतापस्य च तस्य नाम्नाऽयमार्यदेशो भुवि भारताख्याम् ।
दधाविति ज्ञानमहाब्धिमन्थाः प्रवृत्तिमैतिह्यविदो वदन्ति ॥ २ ॥

भूचक्रवर्त्ती भरतः स सम्राट् चन्द्रान्वयोत्पन्ननृपेषु मुख्यः ।
तस्य प्रपौत्रोऽस्ति स हस्तिसंज्ञ आवासिता येन च हस्तिनापूः ॥ ३ ॥

एतस्य वंशे दशमो नृपालः प्रोद्यद्द्युतिः शन्तनुराविरासीत् ।
तस्यात्मजो वीरशिरोमणीन्द्रो देवव्रतो भीष्म उदैन्महात्मा ॥ ४ ॥

धनुर्भृतस्तस्य पराक्रमेणावधूतवीर्यः स बभूव वीरः ।
त्रिःसप्तकृत्वोऽत्र महीशहन्ता रामः प्रसिद्धो जमदग्निसूनुः ॥ ५ ॥

पितुः प्रसादाय महामनस्वी स ब्रह्मचर्यव्रतमासिषेवे ।
आजन्म तस्माद्यमनोऽपि तस्य वशंवदोऽभूदिति को न वेद ॥ ६ ॥

या वस्तुतः क्षत्रियवीर्यजाता संवर्धिता धीवरराजगेहे ।
उद्वाह्य तां सत्यवतीं मनोज्ञां द्वावभ्यगाद् भीष्मपिता तनूजौ ॥ ७ ॥

एकस्तु चित्राङ्गदनामधेयो विचित्रवीर्यश्च परो बभूव ।
आद्यः स गन्धर्वहतः कुमारः काशीशकन्ये उदुवाह चान्यः ॥ ८ ॥

रात्रिन्दिवं भोगविलाससक्तो विचित्रवीर्योऽप्यनपत्य एव ।
ममार पत्नीद्वितयी तदीया नियोगतः प्राप्तवती तनूजौ ॥ ९ ॥

प्रासोष्ट पुत्रं धृतराष्ट्रमम्बिका साऽम्बालिका पाण्डुमजीजनच्च ।
तयोस्तु दासी जनयाञ्चकार नीतिज्ञवर्यं विदुरं सुशीलम् ॥१०॥

ज्यायान् सुतोऽभूद् धृतराष्ट्र एव नावाप राज्यं स च जन्मतोऽन्धः ।
गुणैरुदारैर्महितः श्रियाऽऽढ्यो बभूव राज्येऽधिकृतः स पाण्डुः ॥११॥

पाण्डोः पृथा स्त्री यमवायुशक्रैर्युधिष्ठिरं भीममथार्जुनं च ।
अजीजनत् स्वर्गभिषग्वराभ्यां सहादिदेवं नकुलं च माद्री ॥१२॥

दुर्योधनादीन् धृतराष्ट्रभूपाद् गान्धारिकाऽसोष्ट शतं तनूजान् ।
कालेन सर्वे परिपोषमाप्ता बाल्यं वयोऽतीयुरतिप्रसन्नाः ॥ १३॥

देवव्रतस्तानखिलान् कुमारान् संग्रामभूमौ विजयप्रदात्रीम् ।
कृपालुनाऽसौ गुरुणा कृपेण संशिक्षयामास नरेन्द्रविद्याम् ॥१४॥

द्रोणो भरद्वाजकुलप्रसूत आवुत्त आसीत् स कृपस्य वीरः ।
तस्याऽऽस कृप्यां तनुजः स चाश्वत्थामा पयःपिष्टविवञ्चितो यः ॥१५॥

रामादृते कोऽपि न जामदग्न्याद् द्रोणस्य तुल्योऽत्र धनुर्धरोऽस्ति ।
बभूव विद्वानपि सोऽर्थहीनो ह्यन्योन्यशत्रू वत अक्थ-विद्ये ॥१६॥

द्रोणं धनुर्वेदविदां वरिष्ठं पितामहस्तं महताऽऽदरेण ।
पुरीमनैषीद् गजसाह्वयां स्वां सर्वार्हिताचार्यपदे न्ययुङ्क्त ॥१७॥

धनुर्धराणां धुरि कीर्त्तनीयमाचार्यवर्यं तमिमं प्रसिद्धम् ।
पौत्रानसौ कौरवपाण्डवादीन् समर्पयामास सुशिक्षणाय ॥१८॥

साङ्गं धनुर्वेदमथाधिगन्तुं द्रोणस्य पादाब्जयु कुमाराः ।
सहस्रशोऽन्येऽन्धकवृष्णिवश्या ईयुः स कर्णोऽपि समाजगाम ॥१६॥

गुरुस्तु सर्वानतिरिच्य शिष्यान् धनञ्जयेऽभूदधिकस्पृहावान् ।
भक्तस्य सद्भक्तिवशंवदत्व परात्परोऽप्येति स योऽस्त्यनीहः ॥२०॥

स सव्यसाची रहसि प्रपद्य प्रसाद्य वीरो गुरुमाचचक्षे ।
भुवीह सर्वेषु धनुर्धरेषु वाञ्छाम्यहं श्रेष्ठतमो बुभूषुः ॥२१॥

सुदुर्लभो यद्यपि मामकीनो मनोरथः किन्तु भवत्प्रसादात् ।
भवेदवश्यं परिपूर्ण एष गुरोः कृपा किन्न विधातुमर्हा ॥२२॥

अनारतं भक्तिपरायणस्य प्रवर्त्तमानस्य निजे निदेशे ।
द्रोणः स आचार्यवरः प्रसीदन्नङ्गीचकारास्य वचोऽर्जुनस्य ॥२३॥

एकान्तमास्थाय शरासनीयवेदस्य गूढं विविधं रहस्यम् ।
उपादिशद् येन धनञ्जयेन संसारसर्वाहिंतवीरताऽऽप्ता ॥२४॥

विख्यातिमेतस्य च शूरताया अव्याहतां भूमितले विधातुम् ।
अजीगणन्नैव गुरुः प्रसन्नो हिताहितं कस्यचिदात्मचित्ते ।२५॥

अथैकदाचार्यवरस्य तस्य द्रोणाभिधानस्य मुनेर्विनीतः ।
निषादजातीश-हरिण्यधन्व-तनूज आगात्पदमेकलव्यः ॥२६॥

धनुःश्रुतिं शिक्षयितुं प्रपन्नः स प्रार्थयामास गुरुं तमेनम् ।
न त्वात्रविद्याधिगमेऽधिकारः प्रवर्त्तते ते गुरुरित्यवोचत् ॥२७॥

निशम्य तां तस्य गुरोः प्रवृत्तिं न्यवर्त्तत स्वालयमेकलव्यः ।
निर्माय मृत्स्नाप्रतिमां तदीयां तत्सन्निधावक्षम शस्त्रतासौ ॥२८॥

यदा यदाऽयं निजलक्ष्यवेधे त्रुटिं प्रतीयाय मनस्विवर्यः ।
तदा तदाचार्यपद प्रणम्याभ्यस्यत् प्रयोगान् विविधानिषूणाम् ॥२९॥

श्रद्धैव नूनं सफलत्वहेतुर्निष्ठा भवत्येव सदा फलाढ्या।
भावः शुभः कारणमस्ति सिद्धेरेतैरसाध्यं भुवने न किञ्चन् ॥३०॥

अभ्यास आचार्यपदे च भक्तिर्विद्याधिगत्यां द्वितयं निदानम्।
कालेन चास्मिन् भुवनेऽद्वितीयो धनुर्धरोऽभूदयमेकलव्यः ॥३१॥

कदाचिदेते कुरुपाण्डुपुत्रा महत्यरण्ये मृगयेच्छयाऽगुः।
मृगान् निहन्ता परमप्रवीणस्तानन्वगात् कश्चन सारमेयः ॥३२॥

सश्मश्रुकूर्चां च जटां दधानं मनुष्यमेकं ह्यतिकृष्णकायम्।
विनिक्षिपन्तं स्वशरानजस्रं विलोक्य स श्वा नितरामबुक्कत् ॥३३॥

शरासनाभ्यासविधौ स्वकीयेऽन्तरायभूतं हि तमाकलय्य।
विघ्नं विनिघ्नन्निव सप्त बाणांस्तदास्यमालक्ष्य निरस्यदेषः ॥३४॥

आस्यप्रविष्टाशुगसप्तकेन श्वबुक्कनं तत् सहसा निरस्तम्।
क्षतेर्मुखस्यास्य न काऽपि जाता परन्त्वसौ व्याकुलतां प्रपेदे ॥३५॥

शुनो निवृत्तस्य दशां विलोक्य विषेदुरत्यन्तमिमे कुमाराः।
शुना सहैतेन समे समीयुर्यत्रैकलव्यो भुवि शिक्षते स्म ॥३६॥

विलोक्य चैतानुपढौकमानानातिथ्यमेषां विधिवच्चकार।
त्वं कोऽसि को वास्ति गुरुस्त्वदीयः स चेति पृष्टः किल तान् न्यगादीत्॥

नाम्नैकलव्योऽस्मि निषादजातिर्द्रोणाभिधानोऽस्ति गुरुर्मदीयः।
आत्यन्तिकैकान्तमयेऽत्र देशेऽभ्यस्यामि नित्यं शरसंप्रयोगान् ॥३८॥

इत्थं वचस्तस्य निशम्य सर्वे श्वानं समाश्वास्य विपन्नवक्त्रम्।
प्रतस्थिरे स्वं निलयं कुमारा धनञ्जयश्चिन्तितहृद् बभूव ॥३९॥

यथैकलव्यः शरसंप्रयोगविज्ञानविद्वान् न तथाहमस्मि।
न तत्समानं मम चास्ति लक्ष्यज्ञानं शरक्षेपणकौशलं वा ॥४०॥

४

ततो वनान्ताद् विनिवर्त्तमानोऽर्जुनो विपन्नास्यपयोजकान्तिः ।
उपेत्य धीरो गुरुपादपद्मं नन्नम्यमानः स तमाचचक्षे ॥४१॥

उदीरितं मे बहुशः कृपालो गुरो त्वया सत्यपरायणेन ।
चिकीर्षितोऽहं भुवनैकवीरो भावत्कमुक्तं नु कथं वृथाऽभूत् ॥४२॥

संसारसर्वाहितधीरवीरो धानुष्कविज्ञानविधौ पटीयान् ।
परोऽद्य दृष्टस्तव शिष्य एकः स भिल्लजातिर्वत चित्रमेतत् ॥४३॥

यो भिल्लराजोऽत्र हिरण्यधन्वा तस्यैव पुत्रोऽस्त्ययमेकलव्यः ।
गुरुं भवन्तं वदति स्म पृष्टो धनुर्धरोऽसौ भुवने गरीयान् ॥४४॥

अरण्यमध्ये मृगयागतानां समक्षमन्तेवसतां तवेयम् ।
आश्चर्यमूला घटनाऽघटिष्ट स्ववृत्तमुक्त्वेति गुरुं तदाख्यत् ॥४५॥

गुरुर्विसस्मार ततोऽनुदध्यौ स्मृतिं गतं तद् वच ऐकलव्यम् ।
तूर्णं प्रतस्थे सममर्जुनेन धनुर्धरो यत्र निषादजन्मा ॥४६॥

आचार्यमालोक्य समागतं तं धनुःशरं चापि निधाय भूमौ ।
तत्पादयोर्दण्डवदानतोऽभूदपूपुजत् तं विविधोपचारैः ॥४७॥

स दीनभावाद् विनयादुवाच भवाम्यहं ते गुरुदेव शिष्यः ।
प्रियं विदध्यात् किमयं जनस्ते निर्दिश्यतां तत् प्रणताय मह्यम् ॥४८॥

ब्रवीमि सत्यं भवतो निदेशं कदापि नाहं वितथं करिष्ये ।
देहो धनं चापि मनो मदीयं सर्वस्वमेवार्पितमस्ति तुभ्यम् ॥४९॥

न कोऽपि चास्ते भुवने पदार्थो यो मामकीनो न हि तेऽर्पितः स्यात् ।
धन्योऽस्म्यहं यत् तव पादपद्मधूलिर्विकीर्णा निलये मदीये ॥५०॥

सत्यप्रतिज्ञोऽसि यदि त्वमङ्ग ममासि शिष्यो गुरुदक्षिणायाम् ।
एतर्हि सद्यो निजदक्षहस्ताङ्गुष्ठं समाछिद्य ददस्व मह्यम् ॥५१॥

गुरोर्वचस्तद् विनिशम्य वीरस्तीक्ष्णासिनाङ्गुष्ठमसौ चकर्त्त ।
न्यवेदयत्तच्चरणारविन्दे प्रासीदतां द्वौ गुरुरर्जुनश्च ॥५२॥

स एकलव्योऽभवदर्हणीयोऽर्जुनादपि श्रेष्ठतरः पृथिव्याम् ।
न जायते वा म्रियते न को वा कीर्त्या मनुष्यो भवतीह धन्यः ॥५३॥

अकृत्यमेतादृशमर्जुनस्य श्रेष्ठत्वमिच्छुः स गुरुर्विधाय ।
अपूरयत्तस्य समीहितानि न चिन्तनीया महतां प्रवृत्तिः ॥५४॥

कर्णोऽपि तस्यैव गुरोः प्रकामं धनुःश्रुतेर्ज्ञानमशिक्षताऽसौ ।
एकत्र शिक्षामधिगच्छतां च विद्यार्थिनां ध्यानमभून्न तस्मिन् ॥५५॥

एकान्तवासे निरतः सदैवाचार्यस्य पार्श्वं समुपेत्य नित्यम् ।
स सायकानां विविधान् प्रयोगानभ्यस्यदन्यैर्न तु संगतोऽभूत् ॥५६॥

दुर्योधनाद्यैरथ पाण्डुपुत्रैरन्यैश्च वृष्ण्यन्धकराजवंश्यैः ।
घनिष्ठता नास्य विशेषतोऽभूद् विद्याऽधिगम्या रहसि स्थितेन ॥५७॥

या वीरताऽऽसीद् वसुषेणकर्णे स्वाभाविकी सा खलु जन्मजाता ।
प्रयोजनं नास्य विशेषतोऽभूदभ्यासयोगस्य सदर्हितस्य ॥५८॥

स उत्तमाभ्यासबलेन वीरो बभूव कुन्तीतनयस्तृतीयः ।
विद्यानुरक्तिर्गुरुजानुकम्पा यत्रैव स स्यान्महतो महीयान् ॥५९॥

शौर्यं निजं सर्वसमक्षमेव सर्वाधिकं गौरवमात्मनश्च ।
जोघुष्यते स्मानिशमर्जुनस्तत् सेहेऽसमर्थैः खलु खिद्यमानैः ॥६०॥

अन्योन्यमन्तेवसतां स्वभावात् संस्पर्धमानत्वमुपैति वर्गः ।
अखर्वगर्वं तनुजस्य पाण्डोः समे समाकर्ण्य विषेदिरेऽन्तः ॥६१॥

यो जन्मतो वीर्यवतां वरेण्यो धीराग्रगण्यः सहपाठिनोऽसौ ।
प्रख्याप्यमानां निजवीरताया गर्वोक्तिमेतां नु कथं सहेत ॥६२॥

पयोदवृन्दं ध्वनदन्तरिक्षेऽभियात्युदर्कं कमपेत्य सिंहः ।
तेजस्विनां सोऽस्ति निजः स्वभावोऽन्योत्कर्षमन्तः सहते न येन ॥६३॥

कर्णः प्रतिस्पर्धत एनमात्मस्वभावतो वीरवरेषु धुर्यः ।
इयेष तं जेतुमसौ सभायां जज्वाल चित्तेऽस्य विरोधवह्निः ॥६४॥

विद्वेषभावं वसुषेण एष निगूहयामास निजेऽन्तरङ्गे ।
अध्येतृवर्गेषु न कश्चिदन्यं विशिष्टधैर्यः कथयाञ्चकार ॥६५॥

धनञ्जयं विश्ववरेण्यवीरं कर्णो निरैक्षिष्ट यदा तदैव ।
विद्वेषतश्चेतसि तं तदीये विजेतुमीहा प्रबलायते स्म ॥६६॥

दुर्योधनाद्या वत पाण्डवेभ्यः सदाऽभ्यसूयन्त निजस्वभावात् ।
प्रचक्रिरे तान् विनिहन्तुकामा अनेकधा गर्हितदुष्प्रयत्नान् ॥६७॥

धर्मस्य पक्षाश्रयणेन पाण्डोः सुतान् विहन्तुं न शशाक कश्चित् ।
विधीयमाना अपि कौरवाणां सर्वे प्रयत्ना विफला बभूवुः ॥६८॥

यस्यानुकूलो विधिरस्ति धर्मः सहायकस्तस्य न कोऽपि वैरी ।
विधीयमानैः प्रबलैः प्रयत्नैरनिष्टमाकर्तुमिहेश्वरः स्यात् ॥६९॥

गुरुर्यदा कौरवपाण्डवानां शस्त्रास्त्रशिक्षा सुसमाप्तिमागात् ।
तेषां कलाकौशलसत्प्रयोगप्रदर्शनार्थं व्यमृशत् स्वचित्ते ॥७०॥

अन्तेवसद्वृन्दमुपैति यस्य सद्गौरवं सर्वनृणां समक्षम् ।
आचार्यवर्यस्य च तस्य नान्य आनन्दहेतुर्हि ततोऽतिरिक्तः ॥७१॥

कदाचिदाचार्यवरो निजेच्छामावेदयद् भीष्मपितामहाय ।
तथा च राज्ञे धृतराष्ट्रनाम्ने प्रासीदतां द्वावपि तां निशम्य ॥७२॥

विख्यात-राजेन्द्रकुमारवर्ग-दीव्यद्धनुर्वेद-परीक्षणाय ।
पितामहः सर्वमतेन चैकां तिथिं प्रसन्नः सुविनिश्चिकाय ॥७३॥

महाविशालाद्भुत-रङ्गमञ्च-निर्माणहेतोः कुशलानभिज्ञान् ।
आदिक्षदर्वाग् बहुमासतोऽपि सहस्रशोऽसौ मुदितान्तरात्मा ॥७४॥

शस्त्रास्त्रविज्ञानपरीक्षणस्य निर्णीतमाकर्ण्य दिनं समेषु ।
विद्यार्थिराजन्यकुमारहृत्सु प्रमोदरत्नाकर उद्विवेल्ल ॥७५॥

धनञ्जयहृदुत्थितप्रबलविष्वगञ्चन्महा-
भिमानविटपस्य मे भुवि समूलमुन्मूलने ।
वरोऽवसर एषकः स्वयमहो परीक्षात्मकः
प्रतीक्षित उपागतस्त्विति स वेद कर्णो हृदि ७६।

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकव्ये चतुर्थः सर्गः समाप्तः

—:०:—

## अथ पञ्चमः सर्गः

कुरुपाण्डुसुतान्तरात्मनो मदयन्नस्त्रपरीक्षणात्मकः ।
शुभवासर आगतोऽद्य यः सुखदो विश्वमनीषितश्चिरात् ॥ १ ॥

बहुमूल्यविचित्रवस्तुभिर्विविधैर्विस्तृतरङ्गमेदिनी ।
महती प्रचकास्ति नन्दनप्रतिमाऽऽनन्दनिदानमद्भुता ॥ २ ॥

अतिदीर्घतमं श्रियान्वितं परितः शाद्वलशोभितं स्थलम् ।
रचनाकुशलैः सुविश्रुतै रचितं पूर्वत एव विद्यते ॥ ३ ॥

अमितैः शशिखेटकोडुभिर्महितां चापि नभःश्रियं पराम् ।
निशि चापि महद् वितानकं जयति प्रोज्ज्वलितैः प्रदीपकैः ॥ ४ ॥

धरणीपतयो निमन्त्रिताः सुहृदां चापि समस्तमण्डली ।
जनताप्यखिला निरीक्षितुं सुयशोराजकुमारकौशलम् ॥ ५ ॥

इह रङ्गधरातले नृणां नृपतीनामुपवेशनाय च ।
विविधं रचितं यथोचितं परिविन्यस्तमसंख्यमासनम् ॥ ६ ॥

महतां वसुशालिनां तथा श्रुतिविज्ञानविदां विपश्चिताम् ।
परिकल्पितमासनं पृथङ्नृपतिप्रश्रयवर्त्तिनां तथा ॥ ७ ॥

भुवि तत्र नृपाङ्गनोचितं नृपकन्योचितमन्यतः स्थलम् ।
उपवेशनसुप्रबन्धनं कृतमास्ते परमं मनोहरम् ॥ ८ ॥

विलसन्ति विशालमूर्त्तयस्त्विह मार्गाः शतशः सुमाश्रिताः ।
अमितद्रुमसत्त्ववासितैः परिषिक्ताः शुचिदिव्यवारिभिः ॥ ९ ॥

शुभसूचकपञ्चपल्लवं बकुलाशोककदम्बकच्छदम् ।
बहुवर्णलसद्ध्वजाञ्चितं शतशस्तोरणमुच्चकैः कृतम् ॥१०॥

रमणीय-सुगन्धधृग्-द्रुमोद्गत-निर्यासज-धूमसन्ततिः ।
विदधे शुचिगन्धसंयुतं विपुलं रम्यमहोत्सवस्थलम् ॥११॥

विदुरः प्रथितो महामती रुचिरं शान्तनवाज्ञया चिरात् ।
प्रविधाय महापरिश्रमं रचयामास स रङ्गमण्डपम् ॥१२॥

नयनैः सुनिपीय दर्शकैरिदमाकर्षकमण्डपस्थलम् ।
सुषमाऽपहृतान्तरात्मभिः परितृप्तिर्न समाददे हृदि ॥१३॥

समयेऽस्त्रकलां निरीक्षितुं जनसम्मर्द उपस्थितोऽभवत् ।
निजपूर्वसुनिश्चितासने द्रुतमागत्य शनैरुपाविशत् ॥१४॥

व्यलसन् क्वचिदाप्तकन्यकाः क्वचिदन्तःपुरराजयोषितः ।
क्वचिदास नृपेन्द्रमण्डली क्वचिदास्ते जनता मुदान्विता ॥१५॥

अपरत्र लसन्ति सैनिका अपि सेनापतयोऽन्यतः स्थिताः ।
पणवानकगोमुखादिभिः सहिता वाद्यकलाविदः क्वचित् ॥१६॥

बहुचित्रविचित्रवाससां परिधानेन नृणां मनोहरः ।
शुशुभेऽखिलरङ्गमण्डपो विविधोष्णीषचमत्कृतच्छविः ॥१७॥

विशदेऽगणिताः स्त्रियो नरा इह गच्छन्ति तथा विलीनताम् ।
विततांबुनिधौ सहस्रशो विलयं यान्ति यथा नदीनदाः ॥१८॥

अनुभीष्मपितामहं नृपो धृतराष्ट्रो विदुरं समाश्रितः ।
प्रविवेश सभास्थलं यथासमयं सभ्यजनैः समन्वित ।·१६॥

जनता विहितैर्जयस्वनैर्ध्वनयद्भिर्विदिशो दिशो वियत् ।
श्रवसां कुहरं सुविव्यथेऽतिशयं विश्वदिवौकसामपि ॥२०॥

धृतराष्ट्रमहीपतेः प्रियाऽखिलगान्धारपतेः सुता सती ।
नृपपाण्डुकलत्रसंगता प्रतितस्थौ प्रवरेण्यमासनम् । २१॥

कुरुपाण्डुसुता धनुर्धरा निजशस्त्रास्त्रकलाप्रदर्शकाः ।
स्वनिदिष्टवरासनेषु ते समुपागत्य निषेदुरन्यतः ॥२२॥

जनवर्ग-सुखोपवेशनात् परमाचार्यवरः समागमत् ।
सकृप तनयेन संयुतो जनतासंकुलरङ्गमेदिनीम् ॥२३॥

अतिवृद्धतमोऽप्ययं गुरुः सुसितश्मश्रुशिरोरुहाश्रितः ।
युगलेन च शुभ्रवाससा परिणद्धो धृतशुभ्रचन्दनः ॥२४॥

अनुजानुविशालबाहुकः सुदृढोरस्कविशालकन्धरः ।
महता बलशालिना युतः स्वशरीरेण युवेव भासते ॥२५॥

वरगौरविशालविग्रहो गुरुवर्यः समुपागतो यदा ।
उदतिष्ठदरं समन्ततो नरनारीमनुजेन्द्रमण्डलम् ॥२६॥

दधती जनता मुदं ह्युपाविशदाचार्यनिदेशतः पुनः ।
कुरुपाण्डुसुतांस्ततो गुरुर्न्यदिशद्दर्शयितुं स्वकौशलम् ॥२७॥

मुकुटैः कवचैश्च कुण्डलैर्धृतवीरोचितसत्परिच्छदैः ।
नरराजकुमारमण्डली ननु सैंहीं सुषुमामचूचुरत् ॥२८॥

जनता निखिला समुत्सुका प्रबलोत्साहसमन्विता सती ।
विविधास्त्रकला व्यलोकयत् परमाश्चर्यपयोध्युपप्लुता ॥२९॥

समताऽस्ति च यस्य येन वै युयुधे तेन स वीरपुङ्गवः ।
युवकास्त्रकलानिरीक्षणान्मुमुदे चेतसि दर्शकावलिः ॥३०॥

बलवत्प्रवरो वृकोदरो बलशाली प्रथितः सुयोधनः ।
अवतीर्य च सङ्गराङ्गणे गदया युद्धमुभौ प्रचक्रतुः ॥३१॥

प्रबला प्रतियोगिताऽभवद् ववृधे हन्त युयुत्सुतानयोः ।
प्रहृतिं परिहृत्य कृत्रिमां सहसान्योन्यवधार्थमुद्यतौ ॥३२॥

अवलोक्य तयोर्विचेष्टितं गुरुदेवः स्वतनूजमादिशत् ।
उपगम्य स तत्र तावुभौ विदधे तादृशयुद्धतः पृथक् ॥३३॥

सकलास्त्रनिदर्शनात्परं गतवान् रङ्गमहीं धनञ्जयः ।
विविधं निजमस्त्रकौशलं जनतायाः पुरतो न्यदर्शयत् ॥३४॥

विबुधेन्द्रतनूजनुर्निजादचिरांशोरिव हस्तलाघवात् ।
बहुदिव्यशरप्रयोगतो जनसम्मर्दमनांस्यरञ्जयत् ॥३५॥

अतिविज्ञतया धनुःश्रुतेरथ चात्यन्तिकहस्तकौशलात् ।
तनुजस्य दिवस्पतेर्जना जयशब्दं बहुशः स्म कुर्वते ॥३६॥

अशृणोद् विजयध्वनिं यदा युवकः कोऽपि धनुर्धरो बली ।
जनताश्रितरङ्गमण्डपं सहसा स प्रविवेश निर्भयः ॥३७॥

भुजदण्डमसावताडयद्धरिवच्चापि जगर्ज भीषणम् ।
विनिशम्य तदीयगर्जनं जनवर्गश्चकितोऽभवत्परम् ॥३८॥

स बभूव वृषेन्द्रकन्धरः सितकर्पूरसमानविग्रहः ।
भुजयोश्च तथास्य वक्षसो गुरुताऽऽस्तेऽखिलविश्वमोहिनी ॥ ३९॥

कुलिशायितमस्य जन्मतो ह्यविभेद्यं कवचं हृदि स्थितम् ।
श्रवसोरुभयोश्च कुण्डले शुशुभाते अमृतप्रवर्षिणी ॥ ४०॥

वपुषा सुदृढः स्वयौवनप्रखरोन्मादयुतो गजेन्द्रवत् ।
स मृगेन्द्रगतिः स्वभावतो ददृशे जङ्गमभूधरोपमः ॥ ४१ ॥

विरहय्य निजासनानि ये समभूवन् मनुजा यियासवः ।
अदसीयजगद्विमोहिनीं प्रतितस्थुः सुषमामवेक्ष्य ते ॥४२॥

स उपस्थितवान् यदा तदा प्रथमं वीरशिरोमणिः कृपम् ।
प्रणनाम तदीयसोदरापतिमेकं गुरुवर्यमात्मनः ॥४३॥

तदनन्तरमेष दर्पितोऽर्जुनमालक्ष्य वचोऽब्रवीदिदम् ।
अयि वीर निजं सुकौशलं परिदर्श्यात्मनि मोदसे वृथा ॥४४॥

विजहीह्यभिमानमात्मनो विविधायाः स्वचमत्कृतेः कृते ।
इदमस्त्यखिलं प्रदर्शनं तव साधारणमेव केवलम् ॥४५॥

प्रवरानुमतिर्यदा भवेदहमत्रैव जनौघसन्निधौ ।
परिदर्शयितुं समुत्सुको भवतश्चापि विशिष्टकौशलम् ॥४६॥

जनुषैव सुदिव्यकुण्डलं कवचं चापि दधानमद्भुतम् ।
जननी परिनिश्चिकाय सा निजकानीनमिमं पृथाऽऽत्मजम् ॥४७॥

प्रसमीक्ष्य युवानमीदृशं धृतवीरोचितवेषमात्मजम् ।
समसेचि च मातुरम्बरं वपुरानन्दजबाष्पवारिणा ॥४८॥

स्मृतिमार्गमवातरच्च सा निखिला कर्णजनुःकथाद्भुता ।
मुखचन्द्रममुष्य सुन्दरं ददृशेऽद्यैव विसर्जनात्परम् ॥४९॥

परिपाल्यत एष राधया मम बालोऽधिरथस्य सद्मनि ।
इति पूर्वत एव वेद सा जननी किं समुपेक्षते सुतम् ॥५०॥

सुतमद्य निरीक्ष्य मातृकं शशिनं पूर्णमपां निधिर्यथा ।
हृदयं नितरामुदच्छलद् वपुषो रोमततिर्मुदोद्गता ॥५१॥

अनिमेषनिरीक्षणादहो जननी नैव विरन्तुमीहते ।
प्रससाद मनस्विनी भृश मुखशोभामपिबन्निरन्तरम् ॥५२॥

अभिमान्यवचस्तु कार्णिकं स समाकर्ण्य समक्षमात्मनः ।
चकितः समभूद्धनञ्जयः परमं मोदमगात् सुयोधनः ॥५३॥

परिदर्शय कौशलं निज त्विति साम्रेडितमुच्चकैर्वचः ।
जनताऽतिकुतूहलान्विता परितो व्याहरते स्म मण्डपे ॥५४॥

अचलोपम एष सुस्थिरो नयने दिक्षु विनिक्षिपञ्छनैः ।
करबद्धमुवाच सादर गुरुवर्यं शिरसा नतेन तम् ॥५५॥

गुरुदेव ! भवान् प्रसन्नधीर्निदिशेदत्रभवांस्तदा निजम् ।
करकौशलमेष दर्शये जनसङ्घोऽपि समो दिदृक्षते ॥५६॥

अयि पुत्रक दर्शयस्व भो मम शिष्यस्त्वमपि प्रवर्त्तसे ।
इयमस्ति हि रङ्गभूमिका महितत्वादशशूरकामिनी ॥५७॥

इति हर्षविजृम्भितं गुरोर्वसुषेणो वचनं यदाऽशृणोत् ।
परिमोदयुतेन चेतसा निजशस्त्राभृदागतः पुरः ॥५८॥

करकौशलमार्जुनीयकं सकलं चास्त्रनिदर्शनं परम् ।
वसुषेण इह न्यदर्शयद् अतिसारल्यत एव सत्वरम् ॥५९॥

अतिरिक्तमतोऽर्जुनादपि शरसन्धानकलां प्रदर्शयन् ।
जनवर्गमसावमज्जयत् परमानन्दमये पयोनिधौ ॥६०॥

त्वमसि प्रवरो धनुर्धरस्त्वमहो धन्यतमोऽसि भूतले ।
इति कर्णमुपस्थिता जनाः प्रशशंसुः स्ववचोभिरुच्चकैः ॥६१॥

उपलभ्य स कर्णमीदृशम् इह दुर्योधनमाप्तवान् निधिम् ।
नितरां मुमुदे स्ववक्षसा तमथालिङ्ग्य वचोऽब्रवीदिदम् ॥६२॥

तव वीरवरेण्य ! शूरता-समता नास्ति जगत्त्रयेऽपि भोः ।
शरचालनकौशलं परं ननु नृणां वचसोऽतिरिच्यते ॥६३॥

अहमस्मि नितान्तविस्मितस्तव दिव्यास्त्रनियोगदर्शनात् ।
विदितोऽसि मयाद्य वस्तुतो निजसौभाग्यमवैमि साम्प्रतम् ॥६४॥

भवदीयसमीहितान्यहं पणतां प्राप्य निजानसूनपि ।
परिपूरयितुं समुद्यतः स्वकमावेदय मे मनीषितम् ॥६५॥

अखिलं मम यच्चमूबलं सकल राज्यमिद धनानि च ।
सहितं निखिलैश्च बान्धवैरहमात्मानमथार्पयामि ते ॥६६॥

अयि वीर हितैषिणं निजं त्वमिमं मामवधेहि किङ्करम् ।
अधुनैव हि कालतो ध्रुवं मम साम्राज्यपतिर्भवानभूत् ॥६७॥

विनिशम्य सुयोधनस्य तद् वचनं कर्ण उवाच विस्मितः ।
मनुजेन्द्र न वाच्यमीदृशं मयि दासेरकयोग्यता न ते ॥६८॥

इदमेव ममास्ति गौरवं परमं भाग्यमवैमि चात्मनः ।
वसुधाधिपतिर्भवान् मयि प्रणते तुष्यति तुच्छसेवके ॥६९॥

न धनं न च राज्यवैभवं न हि सांसारिकसौख्यमेव वा ।
परिवाञ्छति केवलं तव प्रणयं शुद्धमयं जनो नतः ॥७०॥

अतिगर्वयुतं धनञ्जयं सुविजेतुं समरेण भूपते ।
इह रङ्गमहोत्सवस्थले समुपस्थानमये मया कृतम् ॥७१॥

इति कर्णवचो निशम्य स व्यथितः कृष्णभुजङ्गमोपमः ।
सहितः प्रबलेन मन्युना विदधे फूत्कृतिमर्जुनो भृशम् ॥७२॥

भुवने य इहास्ति विश्रुतः त्वणमर्वाक् प्रवरो धनुर्धरः ।
सदसि प्रतिपक्षगामिना स हि कर्णेन तिरस्कृतोऽभवत् ॥७३॥

निखिलेषु धनुर्धरेषु यं गुरुवर्यः समघोषयद् वरम् ।
वत सर्वसमक्षमेव स द्विषतैकेन नरावमानितः ॥७४॥

प्रशशंस च कर्णमेव सा समवेता जनता यदा तदा ।
विषसाद परं धनञ्जयो निजविद्वेषिणमब्रवीदिदम् ॥७५॥

अयमस्ति नराधमो ध्रुवं यदहो राजकुमारसंसदि ।
अनिमन्त्रित आगतस्तथा स्वमुखेनैव भृशं विकत्थते ॥७६॥

अखिलास्त्रविदां महत्तमं प्रवरं सर्वधनुष्मतामपि ।
गणयत्यवलेपतोऽधुना निजमात्मानमयं विमूढधीः ॥७७॥

अविनीतमपत्रपं त्विमं वचसा स्वेन हि शूरमानिनम् ।
यमराजनिकेतनातिथिं विदधाम्यत्र सभासदां पुरः ॥७८॥

पुरुहूतसुतस्य तादृशं वच आकर्ण्य दिनेशनन्दनः ।
स्तनयित्नुगभीरगर्जनः पुनराचष्ट जनौघमध्यगः ॥७९॥

अयि फाल्गुन मासि फाल्गुने प्रलपन्तीदृशफल्गु बालकाः ।
वितथं न परस्परं सखे विवदन्ते पुरुषार्थशालिनः ॥८०॥

नृषु राजति यत्र शूरता पुरुषा येऽपि च वीरमानिनः ।
भुवने कृतिमाचरन्ति ते न वृथा वागशनिं प्रयुञ्जते ॥८१॥

अयमस्ति महोत्सवो न ते पुरुषाः सर्व इहाधिकारिणः ।
उपगन्तुमथात्मनः कलां परिसन्दर्शयितुं निमन्त्रिताः ॥८२॥

सदसो नियमानपालयम् न समुल्लङ्घितवान् नयाध्वनः ।
गुरुवर्यनिदेशतो नृणामनुमत्याऽऽत्मकलामदर्शयम् ॥८३॥

भुवि कर्म निजं प्रकुर्वते न च नर्दन्ति वृथा बलान्विताः ।
यदि शक्तिरिहास्ति ते मया सपदि द्वन्द्वरणं सहाचर ॥८४॥

जततैव हि नौ बलाबलं युधि निर्णेष्यति किं विकत्थनैः ।
अयमस्मि समुद्यतोऽधुना प्रतिपद्यस्व रणाजिरं द्रुतम् ॥८५॥

गमितो न मया यमालयं शितशस्त्रास्त्रनिपातितो भवान् ।
भवितास्मि न कर्णनामको वसुधायां स्वमुख न दर्शये ॥८६॥

इति कर्णसगर्वभाषितं स समाकर्ण्य महेन्द्रनन्दनः
गजयूथपतिप्रताडितः प्रचुकोपाथ जगर्ज सिंहवत् ॥८७॥

स दधार निजं शरासनं कटिवासः सुदृढं बबन्ध च ।
प्रणनाम गुरोः पदाम्बुजं रणरङ्गेऽवततार सत्वरः ॥८८॥

निननाद मृगेन्द्रविक्रमः प्रतिपस्फाल भुजावनेकशः ।
प्रतिपक्षिणमाजुहाव तं प्रतितस्थौ च स वीरमुद्रया ॥८९॥

इदमीप्सितमस्ति पूर्वतो वसुषेणो मुमुदेऽन्तरात्मनि ।
वरमाप समीहितं नु स स्वसुहृद्वर्गमथालिलिङ्ग च ॥९०॥

परिधाप्य जयस्रजं मुदा प्रहितोऽभूत्स सुयोधनादिभिः ।
पितृवद् दिननाथजन्मनः प्रचकाशे नितरां मुखद्युतिः ॥९१॥

रणरङ्गमहीमुपस्थितौ निजशस्त्रास्त्रसुसज्जितौ वरौ ।
अपजह्रतुरत्र तावुभौ युवसिंहद्वितयस्य सौभगम् ॥९२॥

भुवने स्त उभौ महाबलौ कृतमन्यू ऋतधर्मपालकौ ।
स्वजयाभिनिवेशगर्वितौ प्रथितौ संगरशास्त्रपण्डितौ ॥९३॥

रमणीयसमानशोभया प्रतिभातः स्म सहोदराविव ।
उभयोर्मधुराननकृतेर्जनता साम्यमवेक्ष्य विस्मिता ॥९४॥

कपिकेतुजयं तथाऽपरे मनुजाः कर्णजयं प्रकुर्वते ।
सकला रणरङ्गमेदिनी जनकोलाहलविप्लुताऽभवत् ॥९५॥

जनता निखिला समुत्सुकाऽद्भुतकौतूहलविस्मयान्विता ।
विजयस्त्वथवा पराजयो भविता कस्य विचिन्तयत्यदः ॥९६॥

अपि चैतदपूर्वमात्मनः सुतयोः संगरमीक्षितुं द्रुतम् ।
गगने समुपस्थितौ तदा दिननाथश्च दिवौकसां पतिः ॥९७॥

कृपभीष्मयुधिष्ठिरादयो गुरुवर्यश्च कपिध्वजान्तिकम् ।
धृतराष्ट्रसुतास्तथा च तत्सुहृदः कर्णसमीपमाययुः ॥९८॥

जननी परिखिन्नमानसा महिलामण्डलमध्यवर्त्तिनी ।
निजयोस्तनुजन्मनोः पृथा न रणं प्राणहरं समीहते ॥९९॥

नयनद्वयमेव वै प्रियं भवति प्राणभृतः स्वभावतः ।
न हि कोऽपि सुमन्दधीरपि प्रसमीहेत निजाङ्गयोः क्षतिम् ॥१००॥

तनयौ प्रतियोद्धुमुद्यतावपि चाऽन्योन्यवधं चिकीर्षतः ।
इति दृष्टवती चिखेद सा निजकर्त्तव्यविमूढतां गता ॥१०१॥

न शशाक शरीरधारणे बत मूर्च्छामधिगत्य भूतले ।
निपपात वरासनान्निजान्न हि कश्चित् सुविवेद तद्गतिम् ॥१०२॥

विदुरस्य मतेन शीतलं समसिञ्चत् परिचारिका जलम् ।
परिबोधमिताऽपि सा तयोः प्रतिरोद्धुं न शशाक संगरम् ॥१०३॥

उचितं बत वृत्तमेतयोर्गदितुं सर्वसमक्षमन्वभूत् ।
परमां ह्रियमन्तरात्मनि प्रतिचक्रे न च किञ्चिदार्त्तिभृत् ॥१०४॥

उभयोर्हितचिन्तने रता न हि वाञ्छन्ति रणं तथापि ते ।
विरतेः सदुपायसंविधौ प्रभवो नैव बभूवुरञ्जसा ॥१०५॥

परिहर्तुमिमं रणं कृपः कृपयाविष्ट इवाभवद् द्विजः ।
उद्‌बोधयदर्जुनेन वै वसुषेणोऽधिकृतो न संगरे ॥१०६॥

उद्‌पद्यत विश्वविश्रुते महिते राजकुलेऽयमर्जुनः ।
तनयाः प्रभवन्ति भूभुजां नृपपुत्रैः सह संगरार्थिनः ॥१०७॥

अयि वीरवरोऽसि कर्ण ते कुलगोत्रादि न विद्महे वयम् ।
पितृनाम च धाम जन्मनः सकलं वेदितुमुत्सहामहे ।१०८॥

प्रहतो वचसा कृपस्य सोऽशनिना सूर्यसुतोऽतिदुःखतः ।
मुखमानमयंस्तदाऽऽत्मनो न वचः किञ्चिदुवाच लज्जितः । १०९।

तदकालमनिष्टमागतं परिचिन्त्यैष सुयोधनस्तदा ।
कृपमेतमवोचदर्जुनप्रभवं वेद न कः पुमानिह ॥११०॥

य इहास्ति सुदर्शनो नरः कृपणं काणमधिक्षिपेदसौ ।
बत नेत्रविहीनमानुषः स कथं तं प्रभवेद् विनिन्दितुम् । ११?॥

कपिकेतुरयं भवन्मते यदि राज्ञा सह योद्धुमर्हति ।
अधुनैव हि संगराङ्गणे नृपतिं कर्णमिमं करोम्यहम् ॥११२॥

इति वाचमुदीर्य सत्वरं श्रुतिविज्ञानविदो विपश्चितः ।
क्षितिदेववराननेकशो द्रुतमाहूय सुयोधनो नृपः ॥११३॥

उपवेश्य सुवर्णनिर्मिते वसुषेणं रुचिरे नृपासने ।
रणरङ्गभुवीह चाङ्गभू - पति - चिह्नं तिलकं चकार सः ॥११४॥

क्षणमात्रत एव सुन्दरे स सितच्छत्रतले व्यराजत ।
परिचालयतः स्म चामरे परितो द्वौ पुरुषौ शुभच्छदौ ॥११५॥

बहुवर्ण-महार्घ्य-हीरकादिक-रत्नैः सुमनोहरैरयम् ।
खचितं मुकुटं सुसन्दधत् प्रचकाशेऽन्य इवोष्णदीधितिः ॥११६॥

जयकारमघोषयन् नराः सह वेदज्ञवरैर्धरामरैः ।
परमां मुदमाप्तवान् समो जनसङ्घोऽपि कुतूहलान्वितः ॥११७॥

अमुना महतोपकारिणा नृपदुर्योधनसौम्यकर्मणा ।
सजलाक्ष-सगद्गदस्वरो वच ऊचेऽर्कसुतः सुयोधनम् ॥११८॥

कुरुराज तवोपकारतोऽनृण आत्मा न भवेत् कदापि मे ।
भुवनेऽत्र भवादृशो नरो गुणसम्मानकरोऽतिदुर्लभः ॥११९॥

अहमामरणं नृणां पते भवता क्रीत इवास्मि साम्प्रतम् ।
तव मित्र निदेशपालनं विदधे यावदिहास्मि जीवितः ॥१२०॥

उपकारकृते त्वया सखे क इह प्रत्युपकार ईह्यते ।
कथयस्व निजं समीहितं तदहं प्राणपणेन साधये ॥१२१॥

विनिशम्य स कर्णभाषितं कुरुराजोऽकथयत् सुयोधनः ।
अयि मित्र मया तु केवलं दृढसौहार्दमपेक्ष्यते तव ॥१२२॥

भुवनत्रयदीपकं तदा पितरं स्वं प्रविधाय साक्षिणम् ।
धृतराष्ट्रसुतेन संव्यधात् परमां प्रीतिमसावनश्वरीम् ॥१२३॥

अतिवृद्धतमो यदाऽऽगतोऽधिरथो धर्मपितास्य मण्डपे ।
वसुषेणमिमं नृपासने मुमुदे वीक्ष्य सुतं तदात्मनः ॥१२४॥

पितरं परिवीक्ष्य चागतं वसुषेणो नृपसिंहपीठतः ।
उदतिष्ठदरं स्वमस्तकं सकिरीटं पितृपादमार्पयत् ॥१२५॥

जनकोऽपि तमभ्यनन्दयच्छिर आघ्राय शुभाशिषां चयैः ।
व्यसृजन्निजनेत्रसम्भवां परमानन्दजवाष्पसन्ततिम् ॥१२६॥

विहसन् स तदा वृकोदरोऽवसरं प्राप्य यथेच्छमुच्चकैः ।
समवोचदयं विपक्षगो विदितः सूतसुतोऽस्ति हन्त भोः ॥१२७॥

उचितं किमु चास्य साहसं ह्यतिनीचान्वयलब्धजन्मनः ।
यदयं प्रतियोद्धुमीहते नृपतिक्षत्रियसत्कुलोद्भुवा ॥१२८॥

वरकुञ्जरपोतकेन किं बलिना शूकरसन्ततेरहो ।
मनुजो वत कश्चिदश्रृणोद् भुवने चात्र परस्पराहवम् ॥१२९॥

बलवानपि जम्बुकात्मजः किमु सिंहस्य पुरः प्रसर्पति ।
निहितोऽपि सुवर्णपञ्जरे किमु काकः क्रतुहव्यभुग्भवेत् ॥१३०॥

बलशालिमृगेन्द्रसन्निधौ नृपतिप्रश्रयवान् सुभोज्यभुक् ।
किमुपैति सुवर्णश्रृङ्खलो नयनानन्दकरोऽपि कुक्कुरः ॥१३१॥

अयि पश्यत मन्दधीरयं ह्यधमः सूतसुतो भवन्नपि ।
परिवाञ्छति सव्यसाचिना सह योद्धुं नितरामपत्रपः ॥१३२॥

निजगाद तदप्रियं वचोऽसहमानो नृपतिः सुयोधनः ।
ननु भीम सुसान्निपातिक-ज्वर-संश्लिष्ट इव प्रतीयसे ॥१३३॥

यदि कश्चिदनीदृशो नरः प्रवदेदित्थमसौ न दोषभाक् ।
परमन्यमधिक्षिपेत् कथं य इह क्षेत्रज आत्मजः स्वयम् ॥१३४॥

सहते वचनं तवेदृशं वसुषेणो महतां महत्तमः ।
अभियाति पयोधरध्वनिं विरुतं वीरहरिर्न जाम्बुकम् ॥१३५॥

नृपतिः किल कर्ण एषको नृपसिंहासनमास्थितो वरम् ।
इति यस्य न विद्यते भवेऽभिमतं तस्य हि मूर्ध्नि मे पदम् ॥१३६॥

तमहं समरार्थमाह्वये द्रुतमायातु स वीरसम्मुखम् ।
यदि नैति निजानने तदा मसिमालिप्य पलायतामितः ॥१३७॥

इति वृत्तमवेत्य सर्वतो विततास्मिन् किल रङ्गमण्डपे ।
कुतुकान्वितदर्शकावलिर्वत कोलाहलमाचरद् भृशम् ॥१३८॥

निखिलाः समुपस्थिता जनाः प्रशशंसुर्नृपतिं सुयोधनम् ।
बहुवारमुदैरयन् मुदा वसुषेणः प्रवरोऽर्जुनादपि ॥१३९॥

इह वीक्ष्य परस्परं मनोमलिनत्वं गुरुवर्य उत्थितः ।
समघोषयदेष उच्चकैर्वचनं सर्वसमक्षमीदृशम् ॥१४०॥

सुकुमारकुमारमण्डलं निजवीरोचितहस्तकौशलम् ।
जनतापुरतो न्यदर्शयद् रविरस्तो भविताऽस्ति सत्वरम् ॥१४१॥

समयेऽत्र विधेय आत्मनः शुचिसान्ध्यो विधिरुत्तमो नृभिः ।
अत एव विसर्ज्यते मया परमानन्दकरोऽयमुत्सवः ॥१४२॥

निजमासनमुत्सृजंस्तदा जनसङ्घो बहुधा व्यभज्यत ।
विविधैः पथिभिर्मनोहरैरगमत् स्वस्वनिकेतनं प्रति ॥१४३॥

पथिषु प्रतिपद्य संहतिं वसुषेणाश्रितवीरताकथाम् ।
निजगाद बहुप्रकारतो मुमुदे तद्विवृतिं निशम्य च ॥१४४॥

सकला जनताऽन्वभूदिदं ह्यभविष्यद् यदि युद्धमेतयोः ।
ध्रुवमेव तदा धनञ्जयं स हि कर्णः प्रवरो व्यजेष्यत ॥१४५॥

द्रोणाचार्यस्य सत्यप्रसृमरवचसा स्वानुभूत्या च यस्य
विश्वासः पूर्वमासीद् यदिह हि भुवने वीर एकोऽर्जुनोऽस्ति ।
सोऽयं धर्मस्य सूनुः सुविमलहृदयः संविशश्वास चैत-
न्नेवास्ते कर्णतुल्यः शरसरणपटुः सद्धनुर्वेदवेत्ता ॥१४६॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये पञ्चमः सर्गः समाप्तः

—:०:—

# अथ षष्ठः सर्गः

स कर्णोऽन्वभूदेकदा मानसे स्वेऽहमस्म्यस्त्रशस्त्रप्रयोगे गरीयान् ।
परं ब्राह्ममस्त्रं न मे ज्ञातमास्ते प्रकाण्डेन तेजस्विना धार्यमाणम् । १ ॥

ध्रुवं विद्यते सर्वतोऽभ्यर्हितं तत् कदाचिन्न तस्य प्रयोगो वृथा स्यात् ।
उपायेन केनापि लब्धं भवेच्चेत् त्रिलोके भविष्याम्यहं वीर एकः ॥२॥

तदस्त्रं स मे द्रोण आचार्यवर्यो न विश्राणयिष्यत्यदस्तर्कयामि ।
यतस्तस्य तस्मिन् महान् पक्षपातोऽर्जुने विद्यते भूयसी चानुरक्तिः ॥३॥

तथाप्यङ्घ्रिपद्मं तदीयं प्रपद्य मयाऽभ्यर्थनीयस्तदर्थं स पूर्वम् ।
प्रदद्यादसौ ब्रह्मणोऽस्त्रं तदाऽहं कृतार्थोऽन्यथा मे क्षतिर्नास्ति काचित्॥४

इदं सर्वमालोच्य कर्णः कदाचिद् वहन्नञ्जलिं मस्तकेनातिनम्रः ।
अदीनोऽप्ययं दीनभावं प्रपन्नस्तमेकान्तसंस्थं गुरुं संन्यगादीत् ॥५॥

प्रभो त्वां समभ्यर्थयिष्यामि किञ्चित् तदर्थं निदेशं त्वदीयं समीहे ।
निदिष्टस्तदाऽऽचार्यदेवेन कर्णो वचो व्याजहारार्थवन्नीतिगर्भम् ॥६॥

सुयोग्येषु पुत्रेषु शिष्येषु चापि गुरूणां हि दृष्टो विशिष्टोऽनुरागः ।
परन्त्वस्ति तेषां समानैव दृष्टिस्तनूजेषु सर्वेषु चान्तेवसत्सु ॥७॥

सदा निश्छलं सेवितोऽभ्यर्थितः सन्नुदारो दयालुः शरण्यः समेषाम् ।
गुरुः प्रेमभाजां स्वकीयाश्रितानां मनःकामनां पूरयत्येव नूनम् ॥८॥

विनीताय मह्यं भवान् ब्राह्ममस्त्रमुपादेष्टुमर्हेत्प्रसन्नान्तरात्मा ।
त्वदादेशतोऽहं तपांसि व्रतानि विधातुं कठोराणि चाप्युद्यतोऽस्मि ॥९॥

तदर्थं भवान् यद्यदादेष्टुमिच्छेद् ध्रुवं पालयिष्याम्यहं तत्तदेव ।
न तत्राणुमात्रत्रुटिं संविधास्ये प्रतिज्ञायते त्वत्पदाब्जं प्रपद्य ॥१०॥

समाकर्ण्य कर्णस्य विप्रः स वाचं गरीयान् गुरुः प्रेमभावं प्रदर्श्य ।
अवादीदये तात सत्या त्वदुक्तिर्भवत्युत्तमे पक्षपातो गुरूणाम् ॥११॥

कृपादृष्टिरन्येषु शिष्येपु चापि मदीया समाना न संशीतिरत्र ।
भवेस्त्वं भवे सर्ववीरेषु मुख्यस्ततस्त्वय्यनन्या मम प्रीतिरास्ते । १२॥

तपःसंशितात्मा तथोद्दीप्ततेजा धृतौ तस्य चास्त्रस्य विप्रः समर्थः ।
कुलीनोऽथवा क्षत्रियो राजसूनुरलं स्यान्न चात्रास्ति सर्वोऽधिकारी॥१३॥

अतस्त्वामहं तत् कथं शिक्षयेयं मम त्वं विजानीहि वैवश्यमस्मिन् ।
गुरोराननात् तद्वचो मर्मभेदि निशम्यैष वीरः परां ग्लानिमापत् ॥१४

भराक्रान्तवत् स्वं शिरस्त्वानमय्य ह्रिया जुष्ट आचार्यपादे निपत्य ।
अनुक्त्वै किञ्चिद् वचोऽसौ विषण्णो हताशो भवन् स्वस्य वेश्मन्यगच्छत्॥

भवेऽस्मिन् गुणग्राहिणामस्त्यभावः समे स्वार्थिनः पक्षपाते रताश्च ।
महान्तोऽपि सन्तीर्ष्ययाक्रान्तचित्ताः स इत्थं विशश्वास नैजेऽन्तरङ्गे ॥१६

तिरस्कारभाजोऽपि वीरस्य तस्य तदस्त्रं समादातुमीहा न चोना ।
प्रतिस्पर्धिना वायुना हन्यमाना परावर्धताऽग्नेर्ज्वलन्ती शिखेव । १७॥

अपूर्तावनीशो भवन् वासनायाः स्वकं मार्गमालोक्य तामिस्रपूर्णम् ।
निजोद्योगसाफल्यकामो मनुष्यः प्रवृत्तोऽनृते जायते नात्र चित्रम् ॥१८॥

असत्यार्जितं वैभवं भङ्गुरं स्यान्न सन्तिष्ठते तज्जगत्यां चिराय ।
उदर्कं तदीयं वृथा नैव वेत्ति नरः स्वार्थरूपग्रहग्रस्तचित्तः ॥१९।

समादातुकामस्य मे ब्राह्ममस्त्रं यदा बाधकं सूतपुत्रत्वमेव ।
तदा किं न तद् गोपयित्वार्जयेयमिति स्वान्तरङ्गे स कर्णो विवेद ॥२०॥

तदस्त्रोपदेशं गुरुर्द्रोणदेवो न चेत् कर्त्तुमिच्छत्यसौ नैव कुर्यात् ।
वदीयो गुरुस्तस्य चाऽस्य दाता भवे विश्रुतो विद्यते जामदग्न्यः ॥२१॥

स एव प्रयत्नान्मयोपासनीयो हृदीत्थं विचिन्त्य प्रसन्नस्तदानीम् ।
अविज्ञापयन्नात्मवृत्तं परेभ्यो महेन्द्राभिधानं गिरिं प्रस्थितोऽभूत् ॥२२॥

परश्वाख्यशस्त्रस्य धर्तुर्महर्षेः समागत्य सोऽह्वाय पादारविन्दम् ।
प्रणम्यादरेणैष साष्टाङ्गपातं विनीतोऽञ्जलिं संविधायेत्यवोचत् ॥२३॥

दयालो ! भृगोर्वंशजन्माहमस्मि त्वदीयश्च दासो महीदेवसूनुः ।
भवत्पादपाथोजभृङ्गायमाणोऽधिगन्तुं समीहे परं ब्राह्ममस्त्रम् ॥२४॥

प्रभो सन्मते त्वन्मतेनास्मि योग्योऽधिकारी तदस्त्रस्य संशिक्षणाय ।
तदाऽघौघविध्वंसि मे स्यादमोघं वरेण्यं भवत्पादपद्मं शरण्यम् ॥२५॥

सुरूपं सुतेजः सुशीलं च तस्य सदाचारयुक्तां परां नम्रतां च ।
विलोक्यैव तेजस्विनामग्रगण्यः स विप्राग्रणीर्मुग्धतामाप सद्यः ॥२६॥

प्रकृष्टप्रभावोऽस्य गोत्रं च शाखां श्रुतेराशु विज्ञाय हृष्टान्तरात्मा ।
निजं पार्श्वमाश्रित्य संस्थातुमस्मै निदेशं ददौ सत्वरं विप्रसिंहः ॥२७॥

गुरोः सावधानेन कर्णेन तेनाद्भुतां प्रीतिपूर्णां सपर्यां विधाय ।
तदीयान्तरङ्गं प्रसह्यापहृत्य स भूमीसुरस्तुष्टतामाशु निन्ये ॥२८॥

ततो ब्रह्मणोऽस्त्रस्य सम्यक् प्रयोगं क्षणार्धद्विषद्व्रातविध्वंसकस्य ।
अमन्दं तमानन्दमाप्तो महर्षिः सुसंहारपूर्वं स चोपादिदेश ॥२९॥

तदस्त्रं समासाद्य मोमुद्यमानो धनुर्धारिणां विश्ववन्द्योऽपि कर्णः ।
अमोघान् विधित्सुः प्रयोगानिपूर्णां रतोऽभ्यासयोगेऽलसत्वं विहाय॥३०

सुदूरे वनप्रान्तरे ढौकमान उपस्थाय नित्यं स एकान्तदेशम् ।
स्वशस्त्रास्त्रनिक्षेपमावर्तयन् सन्निनायात्मनः कालमत्र स्थितोऽसौ ॥३१॥

वनेऽभ्यस्यतोऽस्य श्रमं वीक्षमाणाः सुरा यक्षरक्षांसि विद्याधराद्याः ।
अमीग्रुश्च ये जामदग्न्याश्रमेऽस्मिन्न् परं विस्मयं ते समे भेजिरेऽन्तः॥३२

मनोमोहयितृस्वरूपात्तदीयादुपासेदुषामाश्रमे तत्र तेषाम् ।
सदान्योन्यसम्भाषणात्तेन सार्धं महान् प्रीतिभावः समाविर्बभूव ॥३३॥

स्वकीयां समीहां फलाढ्यां विधातुमजस्रं श्रमस्तेन तेने महीयान् ।
परं संविधानं यदस्तीश्वरीयं प्रयत्नेन को नाऽन्यथा कर्त्तुमीशः ॥३४॥

समीहामहेऽन्यद् वयं कुर्महेऽन्यत् फलं प्राप्नुमोऽन्यन्निदिष्टं यतोऽन्यत् ।
अतो द्यूतवद् भागधेयस्य लोके विचित्रा गतिर्दृश्यते नित्यमेव ॥३५॥

जनो ज्ञानकर्मेन्द्रियाणां मतेश्च सहायत्वमाश्रित्य कर्माणि कर्तुम् ।
स्वतन्त्रो विभातीव किन्त्वेष दैवात् प्रसक्तः प्रसह्यास्ति कर्मान्तरेषु ॥३६॥

सुखानीहमानेन याऽनुष्ठिताऽऽस्ते क्रिया सैव दुःखानि सद्यः प्रसूते ।
दुरूहां गतिं कर्मणां नैव कश्चिद् विपश्चित्परिज्ञातुमीशो धरायाम् ॥३७॥

बलिर्बन्धनं प्राप दासेरकत्वं हरिश्चन्द्र आप्नोदसावन्त्यजस्य ।
नृगो दानिनामग्रगण्यो नृपालः सुकर्माप्यहो कार्कलासत्वमागात् ॥३८॥

असंख्या महापुण्यवन्तो नृदेवाः पुराद्यापि सन्तो महान्तो वरेण्याः ।
विधाने रताः सत्क्रियाणां तथापि चिरं चिक्लिशुर्हन्त दिष्टं बलीयः ॥३९

कदाचित्समभ्यस्यतो बाणविद्यां महीनिर्जरस्याग्निहोत्रस्य धेनोः ।
ममारास्य बाणेन कस्यापि वत्सस्तदज्ञानतोऽपश्यतो दैवयोगात् ॥४०॥

मृतं वत्समालोक्य चिन्तातुरस्य दयालोश्च गोविप्ररक्षणाय ।
निजासूनपि प्रोज्झतस्तस्य शुद्धमचेखिद्यत स्वान्तमत्यार्त्तिभाजः ॥४१॥

अभूद् यस्य विप्रस्य गोवत्स एष स चागत्य हंहो नितान्तं विषण्णः ।
पुरो हिंसकं विद्यमानं विलोक्य क्रुधा प्रज्वलन् कर्णमित्थं शशाप ॥४२

अरे दुष्ट यत्त्वं व्यधाः कर्म घोरं वरः स्यात् तदर्थं तव प्राणदण्डः ।
परं ब्राह्मणोऽहं न शस्त्रं प्रयुञ्जे प्रयच्छामि शापं नृशंसाय तुभ्यम् ॥४३॥

विजेतुं नरं य प्रयत्नं विधत्से परिश्राम्यसीत्थं रिपुं यं निहन्तुम् ।
चिर युध्यमानस्य ते तेन सार्धं रथाङ्गं ग्रसिष्यत्यवश्यं धरित्री ॥४४॥

यथाऽसावधानोऽवधीर्धेनुवत्सं तथाऽसावधानस्य युद्धे रतस्य ।
महोग्रस्वरूपं रणे सन्दधाने विधास्यत्यवश्यं वधं ते सपत्नः ॥४५॥

अरे त्वं मनुष्याधमो नीचनीचः पराज्येष्यमाणोऽसि मे शापयोगात् ।
महापाप गोवंशविध्वंसकारिन्नितो दूरमेतर्हि सद्योऽपसर्प ॥४६॥

महीदेवशापं समाकर्ण्य कर्णो विषीदन् प्रसादाय भूमीसुरस्य ।
विनम्रोऽतिदीनाकृतिर्भीतभीतः प्रयत्नाननेकानसौ संव्यधत्त ॥४७॥

अवोचन्मयाऽजानता विप्रदेव कृतं कर्म घोरं क्षमस्वापराधम् ।
व्रतं कारयित्वा तपश्चारयित्वा मदेनोविशुद्धिं कुरुष्व प्रसीद ॥४८॥

तदर्थं सवत्साः सहस्राणि धेनूर्घटोध्नीरिदानीं प्रदास्यामि तुभ्यम् ।
निज राज्यमैश्वर्यमप्यर्पयामि कृपा दीनदीने त्वया संविधेया ॥४९॥

क्षणार्धेन यो विप्रवर्य्यः प्रसीदत्यसौ प्रार्थनां राज्यसर्वस्वदानम् ।
समन्युस्तृणायाखिल मन्यमानः कथञ्चिन्न सम्प्राद्रवद्वज्रचेताः ॥५०॥

स कर्णस्य भूदेव एभिर्वचोभिर्घृतैः कृष्णवर्त्मेव जाज्वल्यमानः ।
महत्या क्रुद्धा वेपमानाधरोष्ठोऽरुणाक्षः पुनर्व्याजहारेति वाचम् ॥५१॥

विजानासिकिंरे द्विजलोभिनमां त्रिलोकस्य साम्राज्यमिच्छामि नाहम् ।
असत्य कदाचिन्न हास्येऽप्यवोचमतोव्यर्थतां नैव गच्छेन्मदुक्तिः ॥५२॥

वनेऽस्मिन् पुरो मे प्रणन्नम्यमानो निपत्य क्षितौ त्व सदा घृष्ठनासः ।
प्रणाश व्रजेः किन्तु शापापहारो विधातुं न शक्यो वृथा ते प्रयासः ॥५३॥

प्रदायास्य शाप दिधक्षन्निवाग्निस्ततः स्थानतो भूसुरो निर्जगाम ।
विषण्णो निजं भाग्यमाक्रुश्य मन्दं स कर्णस्तदा स्वाश्रमाय प्रतस्थे ॥५४

पश्चात्तापं मनसि विदधे कर्मणैतेन कर्णो
यत्न चक्रे बहुविधमसौ भूसुरस्य प्रसादे ।
तस्योदर्कः कथमपि मनाङ् नानुकूलो बभूव
वामे भते भवति हि विधौ सर्वयत्नो निरथः ॥५४॥

इति श्रीकविवर्यविन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये षष्ठः सर्गः समाप्तः

---

## अथ सप्तमः सर्गः

उपससाद महेन्द्रगिरिस्थितं यदवधेर्जमदग्निसुतस्य सः ।
रुचिरमावसथ रविनन्दनो निरलसो गुरुवर्य्यमनन्दयत् ॥ १ ॥

करगृहीतखनित्रनरो यथाऽभिमतवारि खनन्नधिगच्छति ।
गुरुगत गुरुसेवनतत्परो द्रुततरं परिबोधमवाप्नुते ॥ २ ॥

समवलोक्य गुरोर्मुखपङ्कजं निखिलमेव तदीयमनोगतम् ।
विविधभावमनुक्तमपि द्रुत परिविचिन्त्य सदा समपूरयत् ॥ ३ ॥

न च स नक्तमहः प्रियमप्रिय न हिममुष्णमथापि सुखासुखम् ।
न समुपात्तमनादरमादरं गुरुनिदेशपरः समजीगणत् ॥ ४ ॥

अनुदिन स सुषुप्तिमगात्परं प्रथममेव गुरोर्विजहे च ताम् ।
विनयवानुपगत्य तदन्तिक प्रियकृदस्य मुखाम्बुजमैक्षत ॥ ५ ॥

प्रतिनियम्य निजेन्द्रियसन्ततिं हृदयमप्यवरुध्य तथाऽऽमनः ।
मुकुलितात्मकराङ्गुलिरुद्धतां स विरहय्य गुरु खमसेवत ॥ ६ ॥

गुरुवरस्य हितं प्रचिकीर्षुणा रुधिरमप्यमुना स्वशरीरजम् ।
अविरतं परिवाहितमेकदा समभवत् प्रतिकूलमदःफलम् ॥ ७ ॥

विधिसमीहितमात्मशिरोऽङ्कितं निजकृतैः पुरुषार्थशतैरपि ।
गमयितुं विफलत्वमनीश्वरा ददृशिरे भुवने बहवो जनाः ॥ ८ ॥

अधिगते प्रतिकूलविधिं जने विलसितं पुरतः स्वपरिश्रमैः ।
मणिसुवर्णमुपार्जितमप्यहो स्पृशति सत्वरमेव मृदायते ॥ ९ ॥

सततसेवनतत्परतारतिं समवलोक्य कुशाग्रमतिं तथा ।
परशुराममुनिर्दिनकृत्सुतं प्रणयभाजनतामनयन्निजाम् ॥१०॥

जगति यत्र जगाम स भार्गवः सह निनाय च तत्र तमात्मना ।
विहितया निजसाधुसपर्यया भृगुवरेण्यमसौ समनन्दयत् ॥११॥

परशुराम ऋषिः प्रियभाजनाऽनुगतशिष्यवरेण सह भ्रमन् ।
अतिशयक्रममाप समागतः परमभीममरण्यमटाव्यया ॥१२॥

तपसि लग्नहृदोऽस्य निरन्तरं बत शरीरमभूदतिदुर्बलम् ।
दिनमणेरतिभीषणतेजसा स गमने पथिषु श्रममन्वभूत् ॥१३॥

सघनसौख्यदभूरुहशीतलं सुरुचिरं तलमाश्रितवान् क्वचित् ।
पथि परिश्रमहेतुवशादसौ सुशयितुं समियेष मुनीश्वरः ॥१४॥

प्रियतमस्य सुशिष्यवरस्य तत्सदुपाधानमिभेन्द्रकरोरुकम् ।
समधिगत्य समोदमसंशयं श्रमयुतः स समस्वपदञ्जसा ॥१५॥

निजमसावनुकूलमवाप्तवानवसरं वसुषेणाहितच्छिदम् ।
स्वतनयार्जुनमङ्गलसाधकं परशुभद्बिडहो त्रिदशेश्वरः ॥१६॥

अतिविगर्हितकर्मचिकीर्षया प्रति च कर्णमकारणमीर्ष्यया ।
अधिगतोऽपि च साधुविनिन्द्यतामलमभून्न स लज्जितुमात्मनि ॥१७॥

सुरपतिः कपटाचरणं न चेन्निजसुतस्य कृते ह्यविधास्यत ।
त्रिभुवनेषु न कश्चिदपीदृशो य इह कर्णमशक्ष्यत हिंसितुम् ॥१८॥

न स तदुन्मुखतामगमत् क्वचिन्न युयुधे सह तेन शचीपतिः ।
वत कदर्य इवानृतमाश्रयन् प्रयतते स्म निपातयितुं हि तम् ॥१८॥

कृपणवत्पुरतो रविजन्मनो जगति योद्धुमसौ दरमन्वभूत् ।
न स बभूव समादरभाजनं सुजनसंसदि गर्हिततां गतः ॥२०॥

विजयकामनयाऽर्जुननिष्ठया रविसुतस्य पराजयहेतुताम् ।
परहितप्रतिकूलमनाश्चिराद्पगतत्रप एष उपेयिवान् ॥२१॥

समघटिष्ट महेन्द्रगिरौ वरे भृगुपतेर्घटनाऽऽश्रमसन्निधौ ।
अनुचिता वत कर्णविरोधिनी त्रिदशराजकृतैव बभूव सा ॥२२॥

स्वतनयस्य विधित्सुरयं जयं रविसुतस्य हितं प्रति विद्विषन् ।
सुरपतिर्ननु शापमदापयत् कपटशास्त्रपयोधिपरायणः ॥२३॥

प्रवरकर्णपराजयकारणं गतवतोऽपि च तस्य विडौजसः ।
प्रसृतवत्यपकीर्तिरनश्वरी सुयश आप दिनेशसुतो महत् ॥२४॥

स्वयमिमं हि विजेतुमशक्नुवन् प्रथितवीरदिनेश्वरनन्दनम् ।
अधमदेवपतिर्निजमायया कपटजालमरीरचदद्भुतम् ॥२५॥

सुरपतिप्रहितोऽतिभयावहः समसितासृगलर्कसमाह्वयः ।
कपटकीट उपेत्य शनैः शनैर्निविविशे वत कर्णवरोरुके ॥२६॥

असुहृदष्टपदोऽसुहृदस्य वा विकटकण्टकरोमसमन्वितः ।
प्रखरधामसुतस्य स निर्दयो रुधिरपानरतः समविद्यत ॥२७॥

पिशितवद्रुधिराशनवानसौ विषविदिग्धरदः खलकीटकः ।
अतिशयोग्रशरीरविलक्षणः स्वपिवदसृगमुष्य निरन्तरम् ॥२८॥

स पिशिते निचखान निजान्यहो वसु पदानि यदा रविजन्मनः ।
असुखभानमभूत् परमं तदा व्यथितहृत् स विचिन्तितवानिदम् ॥२९॥

यदि निहन्म्यहमेतमसृग्धयं मम तदोरुककम्पनहेतुना ।
गुरुवरस्य सुषुप्तिसुखं ध्रुवं सुचिरलब्धमिदं हि विनश्यति ॥३०॥

न खलु सेवकधर्मबहिर्मुखो भवितुमर्हति शिष्यजनोऽवशः ।
इति धियायमरुन्तुदवेदनामसहत प्रतिबोधनभीरुकः ॥३१॥

निशितदंष्ट्रभयानकजिह्वकस्त्रिदशनाथवशंवदतां गतः ।
रुधिरपानमवाप्य स कीटकः समभवत्परितृप्तबृहत्तनुः ॥३२॥

क्षरितरक्तकदुष्णितधारया भृगुपतेः परिषिक्तमभूच्छुभम् ।
निखिलपृष्ठमसावचिरं तदा सुखदया विजहे निजनिद्रया ॥३३॥

समुदतिष्ठत दुःखितमानसः क्षणसुषुप्तिविभङ्गवशादसौ ।
रुधिरसिक्तकलेवरमात्मनो ह्यनुभवन् वसुषेणममभाषत ॥३४॥

क इह रे मम गात्रमिदं शुभं कथय रक्तचयैरतिदूषितैः ।
परमपूतहृदः स्वतपस्यया विकृतवान् विवशस्य च निद्रया ॥३५॥

इनज एष निशम्य गुरोर्वचः प्रबलवेदनयाऽतिभयेन च ।
तरुनवच्छदकम्पितविग्रहो मुकुलिताञ्जलिरित्थमुदैरयत् ॥३६॥

सुमहिमन्नपराधमये न मे गणय तत्रभवन् निजचेतसि ।
इह निदानमवेहि भयप्रदम् असितकीटकमष्टपदं त्विमम् ॥३७॥

इति वचो वसुषेण उदीरयन् रुधिरपानसुपुष्टकलेवरम् ।
अतिनिषक्तमिमं खलमूरुके भृगुपतिं खलु कीटमदर्शयत् ॥३८॥

स भृगुवंशमणिः सहितः क्रुधा सरिसृपं हि यदैव निरैक्षत ।
सपदि तत्क्षणमेव निजानसून् जहदसौ पुरतः पतितः क्षितौ ॥३९॥

वियति तत्समयेऽतिभयङ्करो निशिचरो ददृशे मुनिनाऽमुना ।
त्वमयि कोऽसि स पृष्ट इति क्रुधा मुनिवरं तमुवाच कृताञ्जलिः ।४०।

अहमभूवमये मुनिराट् पुरा दनुज एकपरः किल दंशकः ।
अमतिमानवशेन्द्रियसन्ततिः प्रखरपञ्चशरार्दितमानसः ॥४१॥

द्युतिमतीं भवदीयपितामहीं भृगुमुनेः स्त्रियमाहरमेकदा ।
ऋतगिरोऽस्य तु शापवशादिमां भयदकीटकयोनिमुपागमम् ॥४२॥

सदयहृत् स तदा मुनिपुङ्गवो विनयबद्धकरेण मयार्थितः ।
सपदि सुप्रियतां गमितोऽवदत् त्वमयि मङ्गलमेष्यसि मा शुचः ॥४३॥

भुवनपापपरायणराजहा परशुराम उदेष्यति मत्कुले ।
त्वमिह तस्य समन्युनिरीक्षणात्परिहरिष्यसि कीटकलेवरम् ॥४४॥

सरिसृपत्वविमुक्तिमगामहं त्वदनुकम्पनभाजनतां गतः ।
अधिगतेन च सज्जनमृत्युना भवति नूनमघौघपरिक्षयः ॥४५॥

इति वचः समुदीर्य निशाचरे गतवति स्वसमीहितधामनि ।
भृगुपतिर्वसुषेणविधानतो मनसि सन्दिदिहे भृशमात्मनः ॥४६॥

अमितसाहसतो गुरुभक्तितः सहनशीलतयाऽद्भुतया तया ।
महितयाऽस्य च वीरतया तथा परमविस्मयमाप स भार्गवः ॥४७॥

प्रणयवानपि शिष्यजने निजेऽमितदयाप्रवणोऽपि मुनीश्वरः ।
प्रति तमेष रुषेव परिज्वलन् विनयवन्तमसौ समजिज्ञपत् ॥४८॥

प्रियतमानि सुखानि वरानसून् अपि तृणाय च यो भुवि मन्यते ।
असहनीयतरेदृशवेदनां स सहते ननु भूपतिवंशजः ॥४९॥

अमितधैर्यमियं च सहिष्णुता गुरुवरे च निजे प्रियतेदृशी ।
सकलमेतदतीव सुदुर्लभं द्विजवरे, वद कोऽसि मदाश्रितः ॥५०॥

अशनिनेव शतेन समाहतः परमभीतिमितो वसुषेणकः ।
त्रिभुवनेऽपि च वीरशिरोमणिर्भृशमकम्पत भूसुरतेजसा ॥५१॥

मनसि चिन्तितवाननृतं यदा भृगुपतेः पुरतः कथयाम्यहम् ।
उपलभे द्रुतमेव हि कीटवन्मृतिमतो मम सत्यकथा हिता ॥५२॥

मुकुलयन् स्वकराम्बुजयुग्मकं शिरसि तच्च दधद्भयविह्वलः ।
निपतितः सहसा भुवि दण्डवन् प्रणिजगाद स दीनमना इदम् ।५३।

मदपराधमिमं क्षमतां भवान् न शुचिविप्रकुले मम सम्भवः ।
विधिवरास्त्रमहं परिशिक्षितुम् अनृतवाचमुदीरितवान् प्रभो । ५४॥

जनयते धरणीसुरकन्यका नृपतिसंगमतो भुवि यं सुतम् ।
स्वजनिमध्यगमं च तदन्वये जनमिमं त्वमवेह्यपि सौतिकम् ॥५५॥

अधिरथोऽस्ति पिताऽपि च राधिका प्रणयशीलवती मम मातृका ।
गुरुरपि प्रथितोऽपरजन्मदस्तदवदं भृगुवंशजनिं निजाम् ॥५५॥

यदपि सत्यवचोऽहमगोपयं मम तु धर्मपितास्ति भवानपि ।
सदयहृत् क्षमतामपराधिनम् इति निवेद्य दधार स मौनिताम् ॥५७॥

हृदि विमृश्य मुनिः किमपि क्षणं वचनमित्थमुवाच कृतागसम् ।
अतिभयङ्करशापमहं न ते परिददामि वदामि वचस्त्विदम् ॥५८॥

सह समानबलेन नरेण ते यदि भविष्यति भीषणसंगरः ।
तव भविष्यति तत्र सुविस्मृतं विधिमहास्त्रमिदं मरणक्षणे ॥५९॥

द्रुतमितो ह्यपसर्प ममाश्रमात् स्थितिरसत्यकथस्य न तेऽस्त्विह ।
इति निशम्य गुरोर्वचनं ततस्तमभिवन्द्य स हस्तिपुरं गतः ॥६०॥

अनुपमगुरुभक्तौ साहसिक्यातिरेके
मतिमति वसुषेणे प्राणदानोद्यतेऽपि ।
अभवदहह नैव प्रीतिमान् भार्गवोऽसौ
चलति हि न कदाचिद् भाग्यरेखा नराणाम् ॥ ६१ ॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये सप्तमः सर्गः समाप्तः

—:०:—

# अथ अष्टमः सर्गः

ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः ।
रिपुष्वपि दयावांश्च तस्मात् कर्णो वृषः स्मृतः ॥ १ ॥

युद्धशौण्डो महाबाहुर्नित्योद्यतशरासनः ।
केशरीवदिभान् वन्यान् मर्दयन् विचचार सः ॥ २ ॥

त्रिदशैरपि चास्यद्भिः शरवर्षं समन्ततः ।
अशक्यस्तैरयं जेतुं स्रवद्भिर्मांसशोणितम् ॥ ३ ॥

बहुनाऽत्र किमुक्तेन संक्षेपाच्छृणु भारत ।
त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये महारथम् ॥ ४ ॥

महाभारतसम्बद्ध-द्रोणपर्वणि विश्रुते ।
अचिन्त्य-शक्ति-सम्पन्न-श्रीकृष्णस्य वचस्त्विदम् ॥ ५ ॥

शूर एव विजानाति शौर्यं शूरस्य वस्तुतः ।
मघोनोऽशनिसंघातशक्तिं जानन्ति भूभृतः ॥ ६ ॥

शत्रवोऽपि प्रशंसन्ति यस्य वीरस्य वीरताम् ।
स एव गण्यते वीर आत्मानं को विनिन्दति ॥ ७ ॥

धौरेयोऽखिलधीराणां धुर्य्यो विश्वधनुष्मताम् ।
कर्णो दूरादरस्थानमभूत्सर्वमहीभृताम् ॥ ८ ॥

तात्कालिका महेष्वासा अपि वीरा महौजसः ।
तन्नाम्नैव विकम्पन्ते मन्त्रशक्त्या यथोरगाः ॥ ९ ॥

महाप्रतापी विक्रान्तस्तदानीं मगधाधिपः ।
जरासन्धो महीपालोऽभवच्छूरशिरोमणिः ॥१०॥

बलावलेपमत्तेन तेन भूपाः सहस्रशः ।
कारागारेषु निक्षिप्ता बहवः करदीकृताः ॥११॥

दिक्सप्तकृत्वो वीरोऽसौ वीरेन्द्रयदुवशिनः ।
आक्रामत् किन्तु कृष्णस्य प्रभावाद् विफलोऽभवत् ॥१२॥

पुनराक्रमणात् तस्य प्रकृष्टबलशालिनः ।
नारायणोऽपि सबलः पलायनपरोऽभवत् ॥१३॥

मथुरां परितत्याज रैवतं गिरिमाश्रयन् ।
द्वारकां शरणं चक्रे पयोधिपरिवारिताम् ॥१४॥

कपटाचारिणस्तस्य मायामानुषरूपिणः ।
महाभिमानवान् सोऽभूच्छ्रीकृष्णस्य पलायनात् ॥१५॥

अभयोऽपि भयं प्राप्तः परमात्मा सनातनः ।
अतस्तदभिमानस्तु किं न लोकातिगो भवेत् ॥१६॥

आयोधने प्रवृत्ते तमनन्तबलशालिनम् ।
न कोऽपि जेतुं स्यादीशो भगवानप्यमन्यत ॥१७॥

अशेषशक्तिकेन्द्रात्मा दनुजव्रातमर्दनः ।
अशिश्रियच्छलं निन्द्यं यं निहन्तुमधोक्षजः ॥१८॥

वीरग्रामाग्रगण्यस्य तस्य मागधभूपतेः ।
अनुमेयमनायासं जरासन्धस्य पौरुषम् ॥१९॥

कर्णाकर्णिकयाऽऽकर्णि कर्णोऽप्यास्ते महाबलः ।
तेनैषोऽखर्वगर्वेण द्वन्द्वयुद्धे निमन्त्रितः ॥२०॥

तदामन्त्रणमासाद्य कर्णोऽमोमुद्यतात्मनि ।
सत्वरं स जरासन्ध–राजधानीमुपेयिवान् ॥२१॥

उभाविमौ युववयो विश्राणौ वीरपुङ्गवौ ।
परस्परमजेयत्वमानिनौ परमौजसौ ॥२२॥

दिदृक्षमाणा उभयोः समानबलशालिनोः ।
आयोधनं समाजग्मुर्भूपाला आप्ततां गताः ॥२३॥

कालो व्यतीतोऽतिमहानुभयोर्युध्यमानयोः ।
वीराभिमानिनोस्तत्रान्योन्यं स्वविजयैषिणोः ॥२४॥

जरया सन्धितस्वाङ्गे हतोऽन्ते मगधाधिपः ।
वसुषेणेन सबलं चकम्पे भयविह्वलः ॥२५॥

तदानीमञ्जसा सैष कर्णं सन्धानमानयन् ।
तं प्रशंसन् व्याजहार सत्यं वीरोऽङ्ग विद्यसे ॥२६॥

प्रसीदति मनो मेऽद्यानुभूय तव शूरताम् ।
मालिनीं नाम नगरीं निजां तुभ्यं समर्पये ॥२७॥

कुर्वाणस्तत्र राज्यं स्वं भुङ्क्ष्व भोगान् सुरोपमान् ।
विस्मृतिं न त्वया नेयो वयस्य जन एषकः ॥२८॥

कर्णोऽङ्गस्याधिपत्यं प्रागिदानीं मालिनीपुरः ।
राज्येऽभिषिक्तः परमां मुदमाप महीपतिः ॥२९॥

एवं सम्मानितो वीरो मागधेन स भूभुजा ।
भारतीयेषु विक्रान्तभूमिपालेषु विश्रुतः ॥३०॥

तन्वन् प्रभावमतुलमात्मनो निखिलेष्वपि ।
आजगाम प्रसन्नात्मा नगरीं गजसाह्वयाम् ॥३१॥

राजधान्यां कलिङ्गस्य रम्ये राजपुरे स्थले ।
तत्रत्यभूपकन्याया एकदासीत् स्वयंवरः ॥३२॥

तन्वङ्गी रूपसम्पन्ना पूर्णचन्द्रनिभानना ।
द्वितीया कामपत्नीव साऽभवद् विश्वविश्रुता ॥३३॥

तस्याः सौन्दर्य-सद्गन्ध-समाकृष्टाः सहस्रशः ।
चञ्चरीकायितास्तत्र जग्मुर्युवमहीभृतः ॥३४॥

पूर्णेन्दुवदनामेनां चकोरहृदयो नृपः ।
दुर्योधनोऽपि कर्णाद्यैः सँल्लब्धुं सहितोऽव्रजत ॥३५॥

कलिङ्गराजदुहिता सवयस्कसखीवृता ।
स्वकराब्जसमादत्तजयमाला यदाऽऽगता ॥३६॥

तद्रूपार्चिस्समाकृष्टाः शलभायितचेतसः ।
तां समीक्ष्यैव भूपाला ययुः कामशरव्यताम् ॥३७॥

यं यं विलोकयन्ती सा त्यजन्ती परिसर्पति ।
तस्य तस्य मुखाम्भोजे पपात हिमसन्ततिः ॥३८॥

कृतस्मेराननं बाला विस्फारितनिजेक्षणम् ।
दुर्योधनमुपागत्य परितत्याज सा यदा ॥३९॥

अनुभूयापमानं स्वं भूमिपालः सुयोधनः ।
उदीचीं दिशमारूढस्तिग्मरश्मिरिवाज्वलत् ॥४०॥

तां प्रसह्य समादाय नैजं स्यन्दनमानयत् ।
कौरवेन्द्रः स दुद्राव मिषतां सर्वभूभृताम् ॥४१॥

कन्यापहरणादन्ये राजानः स्वपराभवम् ।
मत्वा संहत्य निखिलास्तामानेतुं समुद्यताः ॥४२॥

आदाय शितशस्त्राणि रथानास्थाय शीघ्रगान् ।
प्रहर्तुमनसः सर्वे यदा तमनुदुद्रुवुः ॥४३॥

वसुषेणस्तदा वीर उद्यम्य स्वशरासनम् ।
दुर्योधनं स्वसुहृदं रक्षितुं विदधे मतिम् ॥४४॥

संहतास्ते नृपतयः सहैव प्राहरन् क्रुधा ।
कर्णं किन्तु स वीरेन्द्रो मनागपि न विव्यथे ॥४५॥

तीक्ष्णनाराचसङ्घातैः सर्वेषामपि वैरिणाम् ।
शस्त्रास्त्रजालान्याश्वेव चकर्तैष महाबलः ॥४६॥

रथाः कतीनां विध्वस्ताः केषाञ्चित्तु तुरङ्गमान् ।
निपातिता रथनुदो बहूनामपि केतवः ॥४७॥

सर्वे नृपतयस्तेन युध्यमाना रणाङ्गणे ।
प्रहृताः शितबाणौघैर्व्याकुलत्वं प्रपेदिरे ॥४८॥

अस्त्रचालनचातुर्यं कर्णस्यालोक्य तादृशम् ।
रणाजिरात् समे भूपाः पलायन्त भयान्विताः ॥४९॥

दुर्योधनः सकुशलः कलिङ्गनृपतेः सुताम् ।
आदायाम्बुजपत्राक्षीं हस्तिनः पुरमाययौ ॥५०॥

शुभे मुहूर्ते सम्प्राप्तेऽनुकूलग्रहतारके ।
उपयेमे वरारोहां तां कुरूणां पतिर्मुदा ॥५१॥

एवं कर्णस्य सुहृदः संस्तुतैर्भूरिविक्रमैः ।
दुर्योधनेन विन्यस्तं पदं मूर्धसु भूभुजाम् ॥५२॥

दृष्ट्वा कुरुमहीपाल ओजोऽतिक्रान्तमानुषम् ।
मुमुदे बन्धुभिः साकं कर्णस्याद्भुतकर्मणः ॥५३॥

वसुषेणेन सुहृदा सहायेन न कोऽपि माम् ।
शक्तो धर्षयितुं लोके विशश्वासेत्यसौ हृदि ॥५४॥

कर्णेन मम साम्राज्यं सदा निष्कण्टकं ध्रुवम् ।
एकातपत्रं भुवने भविष्यति न संशयः ॥५५॥

विश्वस्मिन् विश्वभूपाला मंस्यन्ते मामनुत्तमम् ।
सम्राजमिति तस्याभून्मतिरभ्रान्तशाश्वती ॥५६॥

कौरवेन्द्रस्य नृपतेर्धृतराष्ट्रसुतस्य सा ।
प्रतीतिः कर्णसम्बद्धा निर्मूला नैव विद्यते ॥५७॥

यावदासीन्महावीरः कर्णो दिनपतेः सुतः ।
प्राणान् दधदसौ तावन्न कोऽपि तमपाकरोत् ॥५८॥

धराशायिनि संयाते कर्णेऽमितपराक्रमे ।
सर्वसम्पद्युतोऽप्येष ययौ साहसहीनताम् ॥५९॥

प्रद्रवन् युद्धतो भीत्या महाकापुरुषोपमः ।
आत्मानं गोपयामास जले हन्त निमज्जितः ॥६०॥

नासीत् सम्राडसौ कर्णः किन्तु तद्बलमाश्रितः ।
गान्धारीतनयो लोके साम्राज्यसुखमन्वभूत् ॥६१॥

बलीयसां धुरीणस्य कर्णस्य स्थातुमग्रतः ।
का कथा युधि मर्त्यानां देवाश्चापि न शेकिरे ॥६२॥

साकं तिग्मांशुपुत्रेण पिता पार्थस्य वज्रभृत् ।
वृत्रघ्नोऽपि सुराधीशो बिभेति स्म पुरन्दरः ॥६३॥

वर्माभेद्यं कुण्डले चापि दिव्ये, मृत्युघ्नान्येतानि कर्णो निजानि ।
दत्त्वा विप्रच्छद्मनेऽसौ मघोने, कार्त्तो वव्रेऽसूंस्तु मेने तृणाय ॥६४॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये अष्टमः सर्गः समाप्तः

—:०:—

# अथ नवमः सर्गः

धृतराष्ट्रसुतो जिघांसमानो बत कुन्त्या सह पञ्च पाण्डुपुत्रान् ।
अधिवासयितुं पुरेऽत्र लाक्षागृहमेषोऽकृत वारणावताख्ये ॥१॥

व्यमृशत् स खलः स्वचेतसीत्थं यदि चेत् पाण्डुसुता निवासहेतोः ।
जतुवेश्मनि ते समागमिष्यन् स्वविधास्यं किल तांश्च भस्मशेषान् ॥२॥

अमुना विधिना मृता इमे स्युः प्रसृतं नापयशो भवे भवेन्मे ।
विषदिग्धरदा महोरगेन्द्रा निपतेयुर्न भवेच्च यष्टिहानिः ॥३॥

इति भावनया समादरेणातिशयेनात्मनि सम्प्रमोदमानः ।
कपटालयमाश्वसौ नृशंसो नृपपाण्डोस्तनयान् समानिनाय ॥४॥

कतिचिद्दिवसानिमे तदन्तः सुखमध्युष्य च तच्छलं विदित्वा ।
विदुरेण विबोधिताः कदाचिन्निरगुस्तन्निलयात् सुरङ्गदेशात् ॥५॥

निजनिर्गमनात् पर शरण्यं शरणं तीव्रहविर्भुजा नियोज्य ।
रमणीयमपि प्रकाममेतेऽहितमित्येतददीपयन् समन्तात् ॥६॥

सह पञ्चभिरात्मजैरिहैका शयिताऽऽसीन्निशि भिक्षुकी विपन्ना ।
जरठाऽविदिता तपस्विनी सा बत दग्धा प्रबभूव दैवयोगात् ॥७॥

तनयेषु बहिर्गतेषु पाण्डोरतिदूरं मनुजाः प्रगे समेताः ।
महिलां पुरुषांश्च पञ्च दग्धान् ददृशु सातिशयं विचिक्लिशुश्च ॥८॥

अवगत्य स पाण्डवान् प्रदग्धान् सह मात्रा ससुहृत् सुयोधनोऽसौ ।
नितरां मनसि प्रमोदमाप्तो बहिरत्यन्तविषण्णतां प्रपेदे ॥९॥

परलोकहितप्रदं तदानीं सकलं श्राद्धविधिं विधाय तेषाम् ।
निजराज्यमकण्टकं स मेने दनुजाधीशविभूतिरेष धूर्त्तः ॥१०॥

परिहृत्य च वारणावतं ते महितव्यासमहर्षिसन्निदेशात् ।
जननीसहिता युधिष्ठिराद्याः पुरमाशिश्रियुरञ्जसैकचक्राम् ॥११॥

निजगोपितजातिनामधेया विधृतब्राह्मणगोत्रशीलवेषाः ।
न्यवसन्निह भिक्षया चरन्तः कतिचित् स्वानि दिनानि यापयन्तः ॥१२॥

ससुखं निवसद्भिरेभिरस्यां पुरि पाञ्चालनरेश्वरस्य पुत्र्याः ।
द्रुपदस्य सुधाकराननायाः सुसमाकर्णि कथा स्वयंवरस्य ॥१३॥

शुचिना द्रुपदात्मजावरेण्याद्भुतलावण्यमयेन सौरभेण ।
बहवो भ्रमरायिता नरेन्द्रा उपतस्थुर्हृतचेतसो हरिद्भ्यः ॥१४॥

भुवि विश्रुतभूपतीन्द्रजुष्टे समवाये तनुजैः पृथाभिधायाः ।
उपढौकितमेभिरप्यमुष्मिन् प्रथितं भूसुरलाञ्छनं दधानैः ॥१५॥

नृपतीन्द्रसमूहसेव्यमानं नगरं द्रौपदिकं नितान्तरम्यम् ।
त्रिदशालयमप्यदः स्वधाम्ना महता सातिशयं तिरश्चकार ॥१६॥

धृतराष्ट्रसुतः सुयोधनोऽपि द्रुपदस्यात्मसुतास्वयंवरेऽस्मिन् ।
वसुषेणसमन्वितोऽतिहृष्टः सुषमाकृष्ट इयाय राजपुत्र्याः ॥१७॥

महनीयमहार्घ्यवेषवन्तो रमणीयाकृतयो नृपालमुख्याः ।
निजदिव्यवरासनेष्वनेके ह्युपविष्टा अलमेकतो विरेजुः ॥१८॥

मुनयश्च महर्षयो महान्तः श्रुतिविज्ञानविदो विपश्चितश्च ।
परमार्हणयोग्यभूसुरेन्द्रा विलसन्तः प्रचकाशिरेऽपरत्र ॥१९॥

भुवनामररम्यवेषभाजः समुपस्थाय च पञ्च पाण्डवास्ते ।
उपसंविविशुः स्वगुप्तवंशा जगतीमण्डनविप्रमण्डलीषु ॥२०॥

परितः परिनृत्यमानयन्त्रे भृशमुत्तुङ्गतमैकवंशसंस्थे ।
कृतकः परिणाहहीनमीनो विहितोऽभून्नृवरेण लक्ष्यभूतः ॥२१॥

तदधो धनुरेककं गरीयोऽनमनीयं नितरां विशालकायम् ।
गुणहीनमनन्तसद्गुणाढ्यं शरमप्युग्रतरं निधाय भूपः ॥२२॥

द्रुपदः स जुघोष वाचमुच्चैः सगुणं तद्धनुरानतं विधाय ।
इषुणा य इहाशु लक्ष्यमेतत् ससुखं भेत्स्यति मत्सुतापतिः सः ॥२३॥

द्रुपदस्य निशम्य तां प्रतिज्ञां द्रुतमेकैकश उत्थिता नृपालाः ।
सुमुखीमभिलक्ष्य लक्ष्यभेदस्थलमागत्य व्यधुर्बहून् प्रयत्नान् ॥२४॥

बहुभिर्न धनुः कृतं तदुच्चैः कतिभिः श्रान्तिमुपागतैर्न सज्यम् ।
न परे त्विषुमीशिरे विमोक्तुं कृतकार्यो न बभूव कश्चिदेषु ॥२५॥

निखिलानसमर्थतां प्रपन्नानपि पाञ्चालपतिं च खिद्यमानम् ।
अवलोक्य वरेण्यवीरकर्णो मुदितो लक्ष्यविभेदनार्थमागात् ॥२६॥

नमयन् स शरासनं गरीयस्तदधिज्यं विदधद् विना प्रयासम् ।
विचकर्ष च सायकं यदानीं किल कर्णान्तिकमाशु सूर्यजन्मा ॥२७॥

अभवन् कुतुकान्विता नरेन्द्रा विफलाशाश्च समेऽपि पाण्डुपुत्राः ।
निजबाल्यसखीसमावृता सा नृपकन्या च वरार्थिनी चकम्पे ॥२८॥

द्रुपदात्मजया सदःसमक्षं सहसाऽघोषि वचस्तदैतदुच्चैः ।
किल सूतसुतेन नाहमीहे स्वकरं ग्राहयितुं बलीयसाऽपि ॥२९॥

वचनं तदथावधार्य कर्णो गुरुकं तद्धिशरासनं तथैव ।
व्यसृजत् परिलज्जितः समन्युस्तरणिं वीक्ष्य स कृत्रिमं जहास ॥३०॥

परिवृत्य निजासनोपविष्टे वसुषेणे मुदितो धनञ्जयोऽभूत् ।
अचिराय विधाय लक्ष्यभेदं नृपकन्यां स निनाय सद्म नैजम् ॥३१॥

सममेव नृपात्मजेन योग्यो यदपि क्षत्रिय-कन्यका-विवाहः ।
द्रुपदस्य न चास सा प्रतिज्ञा परिभूतिं किमु कर्ण एव यातः ॥३२॥

करपीडनमस्ति नैव निद्यं नृपजाया यदि भूसुरेण सार्द्धम् ।
द्रुपदात्मसुतां विनीय याते विचिकित्सा किमिवार्जुने कृताऽभूत् ॥३३॥

किमु लक्ष्यविभेदपूर्वमेवाऽर्जुनतस्तस्य कुलादिकं न पृष्टम् ।
द्रुपदेन न कृष्णया न चान्यैरपि तद्वंशभवैः प्रधानपुम्भिः ॥३४॥

समियाय यदाऽर्जुनेन कृष्णा सह सन्देहमुपागतो नृपालः ।
निजपुत्रमुवाच मार्गय त्वं मनुजः कः स निनाय तेऽनुजां यः ॥३५॥

विजयी पुरुषः किमास्पदोऽसौ किमु शूद्रस्त्वथ वैश्यवर्णजन्मा ।
स्रगियं किमये स्वभावपूता न्यपतत् सौरभशालिनी श्मशाने ॥३६॥

समुदीरितयाऽनयाऽस्य वाचा नृपतेः स्पष्टमिदं प्रतीयते यत् ।
तनयस्य च केनचित् पृथाया विदिता नैव हि जातिगोत्रधर्माः ॥३७॥

यदि कर्ण उदैन्न राजवंशे ह्यपराजन्यसुतः स आस भूपः ।
अधिकारवतोऽस्य लक्ष्यभेदे निकृतिः किं न भवेदनर्थहेतुः ॥३८॥

यदि गोत्रकुलादि मृग्यमासीत् तदिदं किं न हि पृष्टमर्जुनस्य ।
अगमत् कथमीदृशेन पुंसा सह कृष्णा विदितो न यस्य वंशः ॥३९॥

कुपितो निखिलो नरेन्द्रसङ्घोऽनुचितेनेदृशकर्मणा बभूव ।
सविशेषमसौ चुकोप कर्णः सदसि स्वीयविमाननेद्धमन्युः ॥४०॥

अभिजग्मुरिमे पृथातनूजं सकलाः कर्णपुरोगमा नृपालाः ।
निशितस्वशरप्रयोगदक्षोऽर्जुन एतान् समरेऽभ्यगच्छदेकः ॥४१॥

चरतः समरं नृपैरनेकैः सह तस्याद्भुतविक्रमं विलोक्य ।
परमां मुदमाप वीरकर्णो गुणगृह्या हि भुवीह सन्ति सन्तः ॥४२॥

वसुषेण उवाच मोदमानः प्रबलं भूसुरमेनमङ्ग किं त्वम् ।
भवसि त्रिदशेश्वरेषु कश्चिद् धनुषो वेद उतासि मूर्त्तिधारी ॥४३॥

समरेषु यतो मया त्रिलोक्यां सह योद्धुं प्रभवेद् रथाङ्गपाणिः ।
अथवा त्रिदिवस्पतिः सुरेन्द्रः किमु वा तत्तनयोऽर्जुनो न चान्यः ॥४४॥

निजगाद पृथासुतः स कर्णं विहसन्नाहममीषु कश्चिदस्मि ।
जगतीपतिवन्दिताङ्घ्रिपद्मोऽस्म्ययि भोः कोऽपि महीसुरस्य बालः ॥४५

विधिवत् सुनिषेविताद् गुरोर्मेऽधिगतं चास्ति समस्तमस्त्रशस्त्रम् ।
भवता सह योद्धुमुद्यतोऽहं शरसङ्घान् मयि मुञ्च निर्विशङ्कम् ॥४६॥

स च सेवक आस भूसुराणां निजसर्वस्वमपि प्रदातुमेभ्यः ।
वसुषेण इहोद्यतस्तदर्थं तृणतुल्यानिव वेद चात्मनोऽसून् ॥४७॥

द्विजसर्वविधोपकारकारी स सदा ब्रह्मनिकारतोऽतिबिभ्यत् ।
अभिभावयितुं न योग्यमेतद् विविदे विप्रमहो महादुरन्तम् ॥४८॥

हतभाग्यनरस्य भूतलेऽस्मिन् पयसा यस्य रदच्छदोऽस्ति दग्धः ।
स सदा सभयो भवन् प्रकामं किल तक्रं स्वदते हि फूत्प्रकुर्वन् ॥४९॥

कृतभूसुरवेषमर्जुनं तं हृदि सद्ब्राह्मणमेव मन्यमानः ।
विरतः प्रबभूव युद्धतोऽस्माद् वसुषेणः स महीसुरस्य भक्तः ॥५०॥

त्वरितं सुहृदा समं कुरूणामधिपेनैष सुयोधनेन कर्णः ।
रणभूमिमपास्य पूज्यविप्रो नगरं हस्तिसमाह्वयं प्रतस्थे ॥५१॥

सदसस्तु समक्षमात्मनो वै निकृतिं तामनुभूय भूपतीनाम् ।
द्रुपदात्मजया स याज्ञसेन्या क्रियमाणामभवद् विषण्णचेताः ॥५२॥

परिपूर्त्तिमुपैत्यसौ कदाचिच्छितशस्त्रास्त्रनिपातलब्धजन्मा ।
महतोऽपि महान् व्रणः, परन्तु न हि वाग्बाणसुविक्षतः कदाचित् ॥५३॥

स्वसमाननृपेषु यो निकारः परमं दुःखनिदानमस्ति नूनम् ।
हृदये सुनिखातशल्यरूपो भवति क्षार इव क्षतेऽत्यसह्यः ॥५४॥

महनीयतमा महात्मवर्य्या भुवनत्यागपराश्च वीतरागाः ।
भुवि दुर्लभदर्शनास्तु मानेष्वपमानेषु भवन्ति ये समानाः ॥५५॥

जगतीपतयस्तु येऽभिमानानधिगत्यापि सुशेरते समोदम् ।
चरणाहतिमाप्य शीर्षदेशं ह्यधिरोहत्यधिका ततोऽस्ति धूलिः ॥५६॥

अभिमानवतां महत्तमानामनुतिष्ठन्ति समादरं दूरेण ।
निखिला अपि मानवाः स्वभावान्नृपतीनां धनमस्ति मान एव ॥५७॥

विषसाद नितान्तमेष कर्णो हृदये स्वेऽभिभवेन याज्ञसेन्याः ।
असिता उरगास्तथाः क्षितीन्द्रा निकृतिं स्वां न कदापि विस्मरन्ति ॥५८

अपमानमिमं निजं परेभ्यो न स कर्णो विदितं चकार धीरः ।
प्रबभूव मनः परन्तु तस्य प्रति कृष्णामपकारकश्मलाढ्यम् ॥५९॥

विधिनैव पुरा विनिर्मितोऽभूत् स महाभारतयुद्धहेतुभूतः ।
अत एव सुतो रवेरनेकैः परिभूतिं गमितो भृशं मनुष्यैः ॥६०॥

अपमान इहास्ति मानवानां निकषः सद्गुणराशिसुप्रकर्षः ।
मणयो द्युतिमाप्नुवन्ति वज्राः परमां शाणनिघर्षणेन नूनम् ॥६१॥

अज्ञातजातिकुलशीलनरस्य लक्ष्यभेदे तु मौनमभजद् द्रुपदस्य पुत्री ।
संसारवीरवरकर्णमिमं निरीक्ष्य तस्यापमानमकरोत्तदिदं न सह्यम् ॥६२॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये नवमः सर्गः समाप्तः

—:०:—

# अथ दशमः सर्गः

जित्वा नीता स्वां पुरीमेकचक्रां कृष्णा साकं बान्धवैरर्जुनेन ।
मात्राऽज्ञात्वा ते निदिष्टाः स्वगेहादानीतं यद् वस्तु भोज्यं विभज्य ॥१॥

भागानर्होऽस्त्यद्य लब्धः पदार्थो मात्रादेशोऽप्येष नोल्लङ्घनीयः ।
एका कृष्णा पञ्चपत्नी कथं स्याद् अस्माद्धेतोरुद्गतोऽभूद् विवादः ॥२॥

दिग्भ्यः प्राप्ते दिव्यदृष्टयर्षिसङ्घे संमान्यानां भूभृतां मण्डले च ।
एषां व्यासः प्राग्जनुर्वर्णयित्वा ह्यौद्वाहान्याज्ञापयन्मङ्गलानि ॥३॥

यज्ञोद्भूता सा शची याज्ञसेनी सन्तीमेऽपीन्द्रस्वरूपा समेऽपि ।
तस्मात् सार्धं पञ्चभिः पाण्डुपुत्रैः पाञ्चाल्येका प्राप्नुयात् पाणिपीडाम् ॥४॥

धर्म्यां श्रुत्वा व्यासदेवस्य वाचं प्राप्यादेशं भूभृतां स्वानुकूलम् ।
साकं द्रौपद्यास्तु तैः पाण्डुपुत्रैरुद्वाहोऽभूच्छास्त्रदृष्टैर्विधानैः ॥५॥

श्रित्वा नीतिं वैदुरीं धर्मगर्भां मत्वादेशं वृष्णिवंशप्रभूणाम् ।
ज्ञात्वाऽमोघं द्रौपदं च प्रभावं राज्ञा राज्यं पाण्डवेभ्योऽर्प्यतार्धम् ॥६॥

इन्द्रप्रस्थे धर्मराजः स्वकीयां श्रीसम्पन्नां निर्ममौ राजधानीम् ।
सार्धं स्वीयैर्बान्धवैस्तैश्चतुर्भी राज्यं चक्रे धर्मपूर्वं प्रजासु ॥७॥

नित्यं तुष्टं धर्मभावेन पुष्टं शान्तेर्गेहं सौमनस्यप्रहृष्टम् ।
साम्राज्यं स्वं शश्वदुद्भूतिजुष्टं दृष्ट्वा राजाऽन्तः स मोमुद्यते स्म ॥८॥

शास्ता यत्र श्रौतमार्गानुयायी रक्षादक्षश्चास्ति वर्णाश्रमाणाम् ।
तत्रैवायान्ति श्रियो जागतिक्यो नद्यो यद्वत् स्यन्दमानाः पयोधिम् ॥९॥

क्षात्रं तेजो ब्रह्मवर्चोऽभिपृक्तं राज्ञां नीतिर्धर्मतः संगता वा ।
शत्रूञ्जह्यान्मूलतो दुष्प्रधर्षान् वायुं श्रित्वा काननानीव वह्निः ॥१०॥

साम्राज्यं सर्वत्र यौधिष्ठिरं तद् भेजे भूम्यां विस्तृतिं सद्य एव ।
प्रीत्या नम्रैः कन्धरैर्भूमिपालैराज्ञा मालावत् तदीयोह्यते स्म ॥११॥

कर्षानप्राप्यैव सम्पच्यमाना भूमिर्बीजानि प्रकीर्णान्यवाप्य ।
सर्वैः सर्वाऽलोकि सर्वर्तुसौम्या लोके धर्म्यं शासनं किं न सूते ॥१२॥

स्वे स्वे धर्मे संरताः सर्ववर्णा दृश्यन्तेऽस्मिन्नाश्रमाश्च प्रकामम् ।
सर्वे लोका जीवनस्य स्वकीयं लक्ष्यं प्रापुः सर्वथाऽऽवर्त्तशून्यम् ॥१३॥

नासीच्चौरोऽधार्मिको वा न कश्चित् स्वैरी नासीत् स्वैरिणी स्त्री कथं स्यात् ।
यस्मिन् देशे धर्मपालो नृपालस्तस्मिन् कश्चिन्नोद्भवेज्जात्वधर्मा ॥१४॥

राष्ट्रे नासन्नीतयो भीतयो वा नेमे दृष्टा आधयो व्याधयश्च ।
हिंस्रोऽहिंस्रो जन्तुरस्य प्रतापादेकत्रैव क्रीडितो दृश्यते स्म ॥१५॥

राज्यं दृष्ट्वा स्वं समभ्युन्नतं तद् भ्रातॄन् स्वीयान् प्राणदानोद्यतांश्च ।
कामं प्राप्य स्वानुकूलान् प्रजेशानैच्छद् राजा राजसूयेन यष्टुम् ॥१६॥

साक्षात् कृष्णो यस्य साहाय्यकर्त्ता भर्त्ता धर्त्ताऽनन्तब्रह्माण्डकानाम् ।
ईहावल्ली सत् फलं तस्य पुंसः पूर्वं धत्ते तत्परं सुप्रसूनम् ॥१७॥

संसारेऽस्मिन् यस्य सर्वे क्षितीशाः प्रीत्या भीत्या वा भजन्ते वशत्वम् ।
ध्वस्ताराति राजसूयाख्यमेधं कर्त्तुं शक्तो भूपतीन्द्रः स एव ॥१८॥

आज्ञामाप्त्वा सम्मतिं चानुकम्पां साहाय्यं सद् वासुदेवस्य विष्णोः ।
राज्ञां सिंहः पाण्डवो धर्मजन्मा यज्ञारम्भे श्रीगणेशं नतोऽभूत् ॥१९॥

वीर्य्यैर्दोष्णां स्वानुजानां चतुर्णां वैकुण्ठीयैर्नीतिमत्कौशलैश्च ।
भौमाः भूपाः सर्वतो दिग्विदिक्षु विश्वेऽभूवन् निर्जिता न्यस्तदेहाः ॥२०॥

सिद्धो देशो योऽधुनाऽमेरिकाख्यो यूरोपोऽथ यः पुरा रोमकोऽभूत् ।
रूसश्चीनो यामकोद्यादयश्च सर्वे भेजुस्तस्य दासेरकत्वम् ॥२१॥

एभ्यो देशेभ्यश्च दासेरकेभ्य आक्रान्तेभ्यश्चोत्तरेभ्यः कुरुभ्यः ।
सम्प्राप्तोऽभूद् यो हि राशिर्वसूनां तादृक् त्रैलोक्येऽपि चैकत्र नासीत् ॥२२

श्रावं श्रावं मङ्गलं गीतमैशीः पायं पायं कर्णपीयूषवाचः ।
दायं दायं सर्वभारं परेभ्यो मोदं मोदं मेधमारब्ध राजा ॥२३॥

दर्शं दर्शं यज्ञकार्यं विशालं धेयं धेयं गौरवं तस्य चित्ते ।
यद्योग्यं यत् कार्यमासीन्नृपाणां तेभ्यस्तत्तद् यागकर्त्ताऽऽर्पिपत् सः ॥२४॥

दीनाराणां चापि चामीकराणां संख्यातीतं राशिमृद्धीरकुप्याः ।
राज्ञां रत्नोपायनानि ग्रहीतुं दातोदारो धार्त्तराष्ट्रो नियुक्तः ॥२५॥

कर्णोऽभ्यर्णं यज्ञदेशेऽधमर्णान् ख्यान्तध्यातश्रीजगन्मात्रपर्णान् ।
आकर्ण्यैव ब्रह्मवर्णान् स तूर्णं स्वर्णं प्रादात् सौम्यवर्णं सुवर्णः ॥२६॥

देशाद् देशेभ्योऽपि देशान्तरेभ्योऽसंख्या अश्वा हस्तिनः स्यन्दनानि ।
सौवर्णाद्रिं ह्रेपयन्तः सुवर्ण-खण्डाः प्राप्ताः कोटिराभूषणानाम् ॥२७॥

विख्यातेऽस्मिन् कौरवे सम्प्रदाये यज्ञं कर्तुं धर्मराजस्य पश्चात् ।
सर्वश्रेष्ठश्चास दुर्योधनोऽसौ तस्माच्चक्रे मेधनौकर्णधारः ॥२८॥

प्रापं प्रापं स्वर्णरत्नाद्यनन्तं कामं कामं याचकेभ्यः प्रभूतम् ।
दायं दायं तच्च रात्रिन्दिवं हि श्रामं श्रामं नैव लेभे स निद्राम् ॥२९॥

कार्येष्वन्येष्वर्हणीयेषु चान्ये विश्वे भूपा व्यापृताः संबभूवुः ।
श्रीमान् कृष्णः सर्वलोकैकनाथोऽवर्त्तिष्टाऽसौ पादशौचे मुनीनाम् ॥३०॥

दृष्ट्वाऽपूर्वं धर्मराजप्रभावं सम्पत्तीस्ता जीवने स्वेऽप्यदृष्टाः ।
आश्चर्याब्धौ धार्त्तराष्ट्रो न्यमाङ्क्षीदीर्ष्योत्पन्ना पाण्डवान् प्रत्यमुष्य॥३१

उत्साहेनाभ्यर्हितेनैष यज्ञो मासान् साङ्गं व्याप्य सम्पूर्त्तिमागात् ।
लब्ध्वा मानं यज्ञकर्त्रा विसृष्टाः स्वं स्वं देशं प्रत्यगुर्विश्वभूपाः ॥३२॥

मित्रैः स्वीयैर्भ्रातृभिश्चैव सार्द्धं गान्धारीजः स्वेर्ष्यया दग्धचेताः ।
तस्थाविन्द्रप्रस्थपुर्यां नृपालो मानं प्राप्तोऽप्येष शान्तिं न भेजे ॥३३॥

दग्ध्वाऽरण्यं खाण्डवं पाण्डवेन साहाय्येन श्रीपतेः कृष्णनाम्नः ।
तृप्तिं नीतो हव्यभुग् दानवेन्द्रो रक्षां नीतो विश्वकर्मा मयाख्यः ॥३४॥

आदायाज्ञां वासुदेवस्य विष्णोः स्वप्राणानां रक्षणात् सुप्रियाणाम् ।
राज्ञस्तस्याजातशत्रोः प्रियार्थं तेनापूर्वा निर्मिता राजससत् ॥३५॥

नासीत् काचित् तत्समाना सभान्या भूलोकेऽस्मिन संयुता सत्कलाभिः ।
विख्यातां तां द्रष्टुकामाः सहस्रं संगच्छन्ते स्मानिशं मानवेन्द्राः ॥३६

सद्रत्नानां सन्मणीनां प्रकृष्टा अस्यां न्यासास्तादृशाः संबभूवुः ।
आलोक्यैतान् कुट्टिमानां स्थलेषु भ्रान्तिर्वारां तत्र बोभूयते स्म ॥३७॥

ईशस्तस्यां कारुकश्चित्रितायां दीव्यद्दीप्त्यां सर्वशोभैकधाम्नि ।
साकं स्वीयैर्माण्डलीकैः सुहृद्भिः प्रीत्या द्रष्टुं प्राविशत् कौरवाणाम् ॥

वासोऽलङ्कारादि बिभ्रन्महार्घं भ्राजद्रत्नालौकिकं सत् किरीटम् ।
मुग्धो राजा धार्त्तराष्ट्रोऽम्बुमध्ये भूमिभ्रान्त्या सम्भ्रमात् सम्पपात ॥३९

दृष्ट्वा तस्मिन् सम्पतन्तं नरेन्द्रम् आर्त्तिग्रस्तं सर्वतः स्विन्नगात्रम् ।
द्रौपद्याद्या अङ्गना भीमकाद्याश्चक्रुर्मोदादुच्चहासं पुमांसः ॥४०॥

साधीयांसं मार्गमाश्रित्य यातां पुंसां भ्रान्त्या सम्भवत्येव पातः ।
अज्ञानान्धास्तत्र कुर्वन्ति हासं सन्तः शान्तेर्वाचमेवोच्चरन्ति ॥४१॥

कृत्येनान्यः श्रोतृवर्गोऽप्यनेन चेखिद्येत क्रौर्ययुक्तेन नूनम् ।
य प्रत्येतत् कर्म दुष्टं कृतं हा तस्य स्वान्तं कीदृश क्लेशमाप्नत् ॥४२॥

बाल्ये भीमः क्रीडनादावकार्षीत् कृत्यं यद् यद् दुःखदं कौरवाणाम् ।
तत् तत् सर्वं कौरवेशस्तदानीं सम्यक् सस्मार व्यथाम्भोधिमग्नः ॥४३॥

पाञ्चाल्या यो भीमसेनेन चापि हास्येनानुष्ठीयमानोऽपमानः ।
हेतु र्युद्धेऽभूत् स दुर्योधनस्य सर्वध्वंसेऽस्मिन् महाभारताख्ये ॥४४॥

मातृभ्रातुश्छद्मवत्सम्मतिं तां नीत्वाऽऽदेशं स्वीयजन्मप्रदस्य ।
द्यूतक्रीडार्थं नृपो धर्मराजः सन्दिष्टोऽभूद्धन्त दुर्योधनेन ॥४५॥

द्यूतार्थं वा केनचिद् वा रणार्थं नाहूतोऽहं स्यां कथञ्चिन्निवृत्तः ।
आसीदेषा धर्मराजप्रतिज्ञा दिष्टादिष्टं केन शक्यं निरोद्धुम् ॥४६॥

आह्वानं सुच्छद्म दौरोदरं तद् दुर्दैवात् सोऽमर्षयन्नैव राजा ।
ज्ञात्वाऽप्युग्रं दुर्विपाकं तदीयं द्यूतक्षेत्रेऽवातरद् धर्मसूनुः ॥४७॥

सर्वं राज्यं स्वं सुवर्णानि वाहा आत्मा स्वीया भ्रातरोऽन्ते च कृष्णा ।
राज्ञा पण्यं नीयमानं समस्त धूर्त्तैरेकैकं जितं छद्मरूपैः ॥४८॥

पाण्डोः पुत्राः संकटाकीर्णचित्ता मोमुह्यन्ते कौरवा उच्छलन्तः ।
हा हा हन्ताऽतः परं मामकीना लेखन्यग्रे सत्तुमेषा न शक्ता ॥४९॥

हे हे मल्के लेखनि प्रेयसि त्वम् आज्ञायां मे सर्वदा विद्यसे च ।
वृत्तान्तो यो व्यासनिर्दिष्ट आस्ते तस्योद्गारे नास्ति ते दोषलेशः ॥५०

सम्मर्देऽस्मिन् द्यूतकृच्छद्मभाजां कृत्याकृत्यज्ञाननश्यन्मतीनाम् ।
ईर्ष्यामन्युद्वेषदन्दह्यमानो दूतं स्वामीत्यादिशत् कौरवाणाम् ॥५१॥

हे दूत त्वं याहि यौधिष्ठिराणां हर्म्याणामभ्यन्तरं शीघ्रमेव ।
गत्वा तत्रावेद्य कृष्णामिहत्यं वृत्तं तां मत्पार्श्वमाश्वानयस्व ॥५२॥

गत्वा दूतो द्रौपदीं प्रत्युवाच कृष्णे पार्श्वं गच्छ दुर्योधनस्य ।
द्यूते क्लृप्ता तेन राज्ञा जिताऽसि दासीदानीं वर्त्तसे कौरवाणाम् ॥५३॥

कृष्णा श्रुत्वा तत् तदा दूतवाक्यमाहेदानीं नास्मि संसत्समक्षम् ।
गन्तुं योग्याऽस्पर्शनीयैकवस्त्रा नारीधर्मे मासिके विद्यमाना ॥५४॥

दूते तस्मिन्नागते कौरवेशः कृष्णामानं धूलिसात्कर्त्तुकामः ।
पापीयान् सोऽनुष्ठितस्वापमानात् क्रोधान्धो दुःशासन प्राह भूयः ॥५५॥

हे भ्रातस्त्वं सत्वरं सर्प, कृष्णा यस्यां कस्यां वा दशायां स्थितास्ते ।
आनेतव्या, यन् किमप्यस्ति तस्या वक्तव्यं तन्नः समक्षं ब्रवीतु ॥५६॥

आस्ते ना यः स्वप्रकृत्या च नाम्ना दुष्टः सन्दिष्टश्च राज्ञाऽग्रजेन ।
जन्मारभ्याऽऽमर्षवान् स्वैर्निकारैर्याने तस्य द्रौपदी-शं कथं स्यात् ॥५७॥

आगत्यैव क्रूरराजः स कृष्णाऽभ्यर्णं प्राह त्वं न रे पाण्डवानाम् ।
राज्ञीमात्मानं विजानीहि दुष्टे गर्वः सर्वस्ते भवेदद्य खर्वः ॥५८॥

आस्माकीना साम्प्रतं दास्यसि त्वं द्रष्टाऽऽस्ते त्वां कौरवो राजराजः ।
शीघ्रं गच्छाऽस्मत्प्रभोः पार्श्वमास्मान्नोचेत्केशाकर्षतो यास्यवश्यम् ॥५९॥

साऽवोचद् भो धर्मराजस्य पत्युरस्म्यर्द्धाङ्गं नाधुना गन्तुमर्हा ।
आपत्तिर्या सम्पतेद् धर्मसूनौ सैवास्ते मे नास्मि भिन्ना ततोऽहम् ॥६०॥

क्रोधात्ताम्राक्षो भवन् द्रौपदीं तां गर्जन्नुच्चैरेष भूयो न्यगादीत् ।
व्यर्थः सर्वोऽपि त्वदीयः प्रलापो याया नोचेन्मार्गमन्यं श्रयिष्ये ॥६१॥

कृष्णा तस्य क्रूरचेष्टां विलोक्य श्वश्र्वा गेहं बिभ्यती धावमाना ।
मध्ये मार्गं तेन सद्यो गृहीता चीच्चक्रे सा हन्त रोरुद्यमाना ॥६२॥

तस्याः शीर्षादञ्चलं स्रस्तमासीत् स्निग्धा रम्याः कुन्तलाश्चातिदीर्घाः ।
भूमौ ध्वस्तास्तान् समाकृष्य भूयो दुष्टात्माऽसौ निर्दयस्तामुवाच ॥६३॥

रे रे मूर्खे क्वन्वितः संप्रयासि दुःशीला त्वं पुंश्चली पञ्चपत्नी ।
मद्धस्ताभ्यां तूस्तसद्दिग्गजाभ्यां स्मर्त्तव्यो ऽसौ मोचयेत् त्वां पुमान् यः ॥६४

श्यामश्लक्ष्णादद्रितो वृष्टियोगात् सत्कुल्याभ्यां स्यन्दमाना नदीव ।
दृक्कञ्जाभ्यामश्रु संवाहयन्ती केशाकर्षं द्रौपदी तेन निन्ये ॥६५॥

हस्ताभ्यां सा याति पापत्यमाना तत्पादाब्जे चापि नन्नम्यमाना ।
क्लेशाद् दीर्घं निःश्वसन्ती नताङ्गी तं प्रत्येषाऽन्ते वचो व्याजहार ॥६६

रक्षो दैत्यो रे नृशंसोऽपि चैवं नैजस्त्रीणां नापमानं विधत्ते ।
अस्पृश्यां त्वं मुञ्चमामेकवस्त्रां पापोदर्को विद्यते नाशहेतुः ॥६७।

अशृणवंस्तत्क्रन्दनं रोमहर्षं नीचः कर्षंश्चूर्णकेशांस्तदीयान् ।
पीडाग्रस्तामीहमानां स्वरक्षां संसद्देशं तामसावानिनाय ॥६८॥

दर्शं दर्शं हन्त संसत्समक्षं द्रौपद्यास्तां शोचनीयामवस्थाम् ।
गान्धारीजं कर्णदुःशासनादीन् हित्वा सर्वे मानवाः संव्यसीदन् ॥६९॥

हेमन्तर्तौ प्राप्तवन्तो विपाकं यद्वच्छुष्काः शालयः सन्ति नम्राः ।
तद्वत् ससत्संस्थिताः म्लानचित्ता नम्रास्यास्ते सज्जनाः संबभूवुः ॥७०॥

चीत्कुर्वन्त्या कृष्णया प्रश्न एकस्तेषां सभ्यानां पुरोऽनुष्ठितोऽभूत् ।
पण्यं नेतुं मां दुरक्षप्रयोगे राज्ञश्चास्ते किं जितस्याधिकारः ॥७१॥

भीष्मो द्रोणो वा कृपो धर्मविज्ञा येऽन्ये शान्तिं सन्दधुस्तत्सभायाम् ।
पापं पश्यद्भ्यः परं क्लैव्यभृद्भ्यो देया न्यक्काराः सहस्राणि तेभ्यः ॥७२

द्यूतक्रीडासक्तचित्तं नरेन्द्रं धर्मात्मानं धर्मसूनुं च धिग्धिक् ।
यस्याधर्म्यात्कर्मणो हेतुभूतान्मर्यादातो भ्रंशिता भूत् कुलस्त्री ॥७३॥

दृष्ट्वा शान्तिं तत्सभायां विकर्णः उद्विग्नः सन्नुत्थितो धार्त्तराष्ट्रः ।
सम्बोध्यैतान् धर्मवृद्धान् समस्तान् ससत्संस्थान् वाचमेतामुवाच ॥७४॥

संकोचाद् वा पक्षपाताद् भयाद् वा कामाल्लोभाद् वर्त्तमानाः सभायाम् ।
ये पापा नो रुन्धतेऽधर्मकार्यं लोकान् निन्द्यांस्ते त्ववश्यं प्रयान्ति ॥७५

पाञ्चालीयं याचते न्यायभिक्षां धर्मज्ञेभ्यो न्यायविद्भ्यो भवद्भ्यः ।
स्नेह दत्त्वा कर्णदेशे भवन्तः स्नेहं हित्वा शेरते हन्त चित्रम् ॥७६॥

निन्द्यं द्यूत दीव्यतस्तस्य राज्ञः पण्ये दातुं द्रौपदीं नेश्वरत्वम् ।
अस्त्यन्योऽन्यं वेदशास्त्रेऽधिकारो दम्पत्योर्वै दृश्यमानः समानः ॥७७॥

ऐतिह्ये वा कुत्रचिन्नैव दृष्टा पण्यं नीताऽऽसीत् स्वकीया कुलस्त्री ।
सुस्पष्टेऽस्मिन् न्यायमार्गे समेषां मौनग्राहः सम्भवेद् युद्धहेतुः ॥७८॥

राजा चैतेन स्वयं निर्जितेन पञ्चानां या पत्निकेयं पणत्वम् ।
आनीता चेन्नैव सा निर्जिताऽऽस्ते धूर्तैर्द्यूते वञ्चितो धर्मराजः ॥७९॥

द्रौपद्या योऽनुष्ठितोऽय निकार आस्ते नूनं नीचता पापकार्यम् ।
तस्मात्तूर्णं मुच्यतां पाण्डवानां पत्नी साध्वी धृष्टद्युम्नानुजेयम् ॥८०॥

आकर्ण्यैतां गां विकर्णस्य कर्णो श्रुत्वाऽन्धोऽन्धो दुष्टदुर्योधनस्य ।
पक्षं श्रित्वा कर्तुकामः प्रसादं जल्पन्तं तं प्रत्यवोचद् विकर्णम् ॥८१॥

धर्मज्ञत्वं मा विकत्थस्व नैजं त्वं वै नूनं विद्यसे बालबुद्धिः ।
नीतिज्ञानां नैव सेवा कृता यैर्जल्पन्तीत्थं प्रायशो बालिशास्ते ॥८२॥

सर्वस्वं चेद् धर्मराजो दुरन्ते नीत्वा पण्ये निर्जितोऽभूत्तदानीम् ॥
पत्नी स्वीया भ्रातरः सोदराश्च किं रे तस्माद् बाह्यभूता भवन्ति ॥८३॥

धर्मात् सैषा द्रौपदी वाप्यधर्मात् स्वभ्रातॄणां पश्यतां वै पुरस्तात् ।
नीता पण्यं तैर्न चेद् वार्यमाणाऽस्याः स्वातन्त्र्यं को बुधः सम्प्रतीयात् ॥

यद् वै प्रोक्तं ह्येकवस्त्रत्वमस्या आस्ते नूनं सा व्यवस्था सतीनाम् ।
पण्यस्त्रीवद् याऽस्त्यहो पञ्चपत्नी तत्सम्बन्धे सूनृता नेयमुक्तिः ॥८५॥

एतर्ह्येते पाण्डवाः सन्ति दासा वश्यं प्राप्ता धार्त्तराष्ट्रस्य राज्ञः ।
तेषामर्धाङ्गस्थिते यं स्वभावाद् दासी नूनं विद्यते याज्ञसेनी ॥८६॥

जेतेदानीं यद् यदिच्छेद् विदध्यात् प्राणप्रेयान् मेऽङ्ग दुश्शासन त्वम् ।
गृह्णीष्वैतत्पाण्डुपुत्रांशुकानि कृष्णावासस्तत्परं ग्राह्यमास्ते ॥८७॥

पाण्डोः पुत्रा धर्मपाशेन बद्धाः श्रुत्वा वाचं कार्णिकीं सद्य एव ।
उत्तार्यारं रम्यरुक्माङ्कितानि सालङ्कारं सन्ददुः स्वाम्बराणि ॥८८॥

लोकं लोकं पाण्डवान् नग्नगात्राँल्लोकाः सर्वे साश्रुनेत्रा बभूवुः ।
दृष्ट्वा दृश्यं तच्च कारुण्यपूर्णं वज्रग्रावा दीर्यते रोरुदावान् ॥८९॥

एकं वस्त्रं धारयन्ती भयार्त्ता व्याधत्रस्ता कम्पिताङ्गी मृगीव ।
कर्णोत्साहं प्रोप्य दुःशासनेन खुच्चैः कृष्णा संगृहीता रुरोद ।९०॥

स्वीये चैले गृह्यमाणे प्रसह्य स्वाङ्गान्येषा द्रौपदी गूहयन्ती ।
दीनां वाचं व्याहरन्त्यालुलोके सर्वान् सभ्यानज्ञानतो धर्ममर्म ॥९१॥

द्रोणाचार्यो भीष्मदेवः कृपश्च तातो वृद्धः कौरवाणां तथाऽन्ये ।
कर्षन्तं तद् द्रौपदीवस्त्रमेनं पापीयांसं नैव केचिन्न्यरुन्धन् ॥९२॥

तस्मिन् काले भीषणे केवलैका कार्यं चैतद् वैदुरी वाग् व्यरौत्सीत् ।
किन्त्वेतस्या दुर्बलाङ्गाश्रिताया एतेष्वासीन् नैव कश्चित् प्रभावः ॥९३॥

भर्तॄन् दृष्ट्वा सा निजोर्जस्वलांस्ताँल्लोकोज्जेतॄन् पञ्च वाचंयमांश्च ।
आकृष्य स्वां सर्वतश्चित्तवृत्तिं दीनाऽनाथाऽनाथनाथं ननाथे ॥९४॥

कारुण्याब्धे श्रीपते द्वारिकाया वासिन् स्वामिन् दुःखचेतःशरण्य ।
भक्तानां हे भीतिहर्तः कृपालो गोपीभर्तर्हे मनोवेगगन्तः ॥९५॥

मां त्रायस्व क्लेशसिन्धौ निमग्नां नग्नां कर्तुं चेष्टते दुष्ट एषः ।
विख्यातस्त्वं भक्तरक्षापटीन् नाथैर्हीनामेह्यये रक्ष रक्ष ॥९६॥

श्रुत्वा कृष्णः स्वीयभक्तार्त्तवाणीमन्तर्यामी वस्त्ररूपं दधार ।
बाहू स्रस्तौ दिक्सहस्रेभवीर्यौ वासोह्रासो नाभवद् याज्ञसेन्याः ॥९७॥

अत्याचारोऽन्याय एतादृशो वा नीचत्वं तत् क्रूरताऽसभ्यतेदृक् ।
लोके दृष्टाऽऽकर्णिता वा न कैश्चिद् यादृङ्निन्द्या हन्त कृष्णाश्रितेयम् ।

सन्त्यन्योन्यं धर्मतोऽधर्मतो वा शीर्षच्छेदं भ्रातरो युद्ध्यमानाः ।
किन्तु स्वासां ते च दुर्हृद्वधूनां कुर्वन्तीत्थं भूतले नापमानम् ॥९९॥

विज्ञा वृद्धा धर्मशास्त्रप्रवीणाः स्थाने यस्मिन् विद्यमाना समर्थाः ।
तेषां दृक्स्था धर्षिता चेत्कुलस्त्री ज्ञानं धिग् धिक् पौरुषं वा तदीयम् ॥

साध्वी माता ते पिता चास्ति सूर्यः कर्ण त्वं रे सौतिकं दुग्धमन्नम् ।
पीत्वा भुक्त्वा वर्धितोऽभूस्तदानीं बुद्धिर्भ्रष्टा किं न ते बोभवीतु ॥१०१॥

पृथ्वी दीर्णा न कस्मादभवदहह रे विद्युतां किं न पात
ऐशं नेत्रं तृतीयं ज्वलदनलसमं किं न चोन्मीलितं तत् ।
वज्रोऽमोघो मघोना किमिव न हि हरे तत्र काले प्रयुक्तः
शीर्षस्था सा सतीनामुभयकुलनुताऽधर्षि कृष्णा यदानीम् ॥१०२॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये दशमः सर्गः समाप्तः

—:०:—

## अथ एकादशः सर्गः

दयामथासाद्य जगत्पतेः प्रभोस्तदंशुके बिभ्रति दैर्घ्यमद्भुतम् ।
प्रभावमाकर्ण्य वधूद्भवं परं प्रसादमामोद् धृतराष्ट्रभूपतिः ॥ १ ॥

नृपानुकम्पाप्तवरेण पञ्चभिर्धवैः स्वकीयैर्द्रुपदात्मजा समम् ।
अपास्य दुर्योधनदासतां पुनः स्वतन्त्रतामाप निजार्त्तिनाशिनीम् ॥ २ ॥

विनिर्जितं राज्यमनन्तवैभवं सकोषभूपाहयहस्तिसैनिकम् ।
प्रदाय वृद्धो नृपकौरवेश्वरः स्वकं पुरं प्रैरयदेष पाण्डवान् ॥ ३ ॥

पथि प्रवृत्ताः शकुनिप्रयत्नतो दुरोदरोन्मादगृहीतचेतसः ।
पुनर्निवृत्ता भवितव्यतां नरो निरोद्धुमीशः क इहास्ति भूतले ॥ ४ ॥

विधानमेतत्प्रबभूव निश्चितं विनिर्जितो यो मनुजो भवेदिह ।
वसेत् स नूनं विपिनेऽर्कवत्सरांस्तथैकवर्ष सुनिगूहितश्चरेत् ॥ ५ ॥

निगूहितात्मा विदितो भवेद् यदा पुनस्तदा तं नियमं प्रपालयेत् ।
परस्पराव्याहतरूप आवयोर्निरन्तर संप्रचलेदयं क्रमः ॥ ६ ॥

अभूद् यदाङ्गीकृत एष निर्णयो युधिष्ठिरेणानुगतात्मबन्धुना ।
दुरोदरं तत् पुनरप्यभूत्तयोर्दुरक्षशौण्डस्य मतिर्विपद्यते ॥ ७ ॥

नितान्तसंविभ्रमकारिगर्हितच्छलादसौ शाकुनिकान्नरेश्वरः ।
ऋतप्रियश्छद्मविहीनमानसः पराजितो धर्मसुतोऽभवत्पुनः ॥ ८ ॥

पृथां स्वकीयां जननीं युधिष्ठिरो विहाय भूपो विदुरस्य सद्मनि ।
सबान्धवो द्वादशवर्षमेनया स कृष्णया सार्द्धमरण्यमीयिवान् ॥ ९ ॥

तमन्वगुर्विद्वदनेकभूसुरा नृपं पुराणश्रुतिशास्त्रकोविदाः ।
वराश्चतुर्वर्गफलार्थिनो नराः सनातनं धर्ममिवाकुतोभयम् ॥१०॥

अतन्द्रितस्तैः सहितो महीसुरैर्महीश्वरो धर्मतपोव्रतादिकम् ।
चचार सर्वं विपिनेऽपि धर्मवित् स पञ्चयज्ञादिविधानतत्परः ॥११॥

सुयोधनस्तु प्रधनं स्म मन्यते बलैकमुख्य तदवश्यभाविनम् ।
पितामहद्रोणकृपादियुद्धिदो ह्यतो नतोऽसौ धनतोऽप्यतोषयत् ॥१२॥

स्वकं प्रजावर्गममोदयद् भृश प्रजेश्वरान्माण्डलिकांश्च भूपतीन् ।
विनिर्जित कापटिकप्रयोगतो नयेन राज्य स विजेतुमैहत ॥१३॥

स पाण्डुपुत्रानपमानविह्वलान् दुरन्तदुःखाम्बुधिमग्नमानसान् ।
सदैव तान् दुर्गतरूपधारिणो निरीक्ष्य मोदेन बभूव तुन्दिलः ॥१४॥

युधिष्ठिरोऽप्याहवदुर्निवारितां सबान्धवः स्वीयमनस्यमन्यत ।
विचिन्त्य दुर्योधनपक्षमाश्रितान् महारथांस्तस्य मनस्त्वकम्पत ॥१५॥

न भीष्मकद्रोणकृपादितो भयं बभूव तस्यात्मनि भीषणं तथा ।
सुपर्णकर्णस्मरणेन तन्मनोभुजङ्गमो भीतिमुपागमद् यथा ॥१६॥

स वेद कर्णस्य वरेण्यशूरतां कृतज्ञतां तस्य ऋतप्रतिज्ञताम् ।
सदैव दुर्योधनपक्षपातितां पराक्रमं चापि महान्तमद्भुतम् ॥१७॥

दिनेश्वरश्चापि निशीथिनीश्वरो यमोऽनिलः पावक ईश्वरोऽप्यपाम् ।
चलेयुरेते नियमान्निजात् परं न कर्ण एष प्रचलेत् प्रतिश्रुतात् ॥१८॥

अवेत्य तद् धर्मसुतोऽतिचिन्तितो विजेतुमेनं वसुषेणमाहवे ।
वरेण्यदिव्यास्त्रमवाप्तुमर्जुनं पर श्रियं प्रैरयदिन्द्रसन्निधौ ॥१९॥

स देवराजोऽपि च कर्णविक्रमात् सदैव विभ्यन्मुनिवर्यलोमशम् ।
युधिष्ठिरं सान्त्वयितुं तदन्तिकं प्रणोदयामास वनावनौ द्रुतम् ॥२०॥

ऋषिः स कान्तारमुपेत्य भूपतिं निवेदयामास निदेशमैन्द्रकम् ।
न कर्णचिन्ता भवता विधीयतां निवर्हणं यास्यति मच्छलादसौ ॥२१॥

नृपः समाश्वासनमप्यवाप्य तन्मरुत्वतो वृत्रहरस्य वज्रिणः ।
दधार शान्तिं न तदीयमानसम् उदेति भीः किं न महापराक्रमात् ॥२२॥

तदाज्ञयाऽध्युष्य दिवं शराब्दकं धनञ्जयः प्राप्य च दिव्यमस्त्रकम् ।
पराक्रमध्वस्तविभिन्नदानवो निवातपूर्वान् कवचान् निहत्य च ॥२३॥

समादृतस्तत्र स दानवारिभिर्दिवः समालिङ्गित ईश्वरेण च ।
वियोगदुःखार्दितभूतलस्थितस्वबान्धवाभ्यर्णमुपागमत्पुनः ॥२४॥

अटाट्यमानः सह बान्धवैर्निजैः स कृष्णया चापि युधिष्ठिरो नृपः ।
सुखप्रदे द्वैतवने समागतः स्वधर्ममाश्रित्य निवासमाचरत् ॥२५॥

प्रयुक्तयोपासनया दिवस्पतेरवापि दिव्याशनपाकसाधकम् ।
सुपात्रमेकं किल तत्प्रभावतोऽन्धसा नृपोऽसंख्यनरानतर्पयत् ॥२६॥

इयं हि यावद् द्रुपदात्मजाऽशनं न संविधत्ते नृपतिर्द्विजातिथीन् ।
स तावदन्तेवसतः समागतानभोजयत् प्रत्यहमेव तद्बलात् ॥२७॥

उपेयुषो द्वैतवनं सुयोधनो निशम्य पाण्डोस्तनयान् सुमन्दधीः ।
निजातुलैश्वर्यनिदर्शनेच्छया तदन्तिकं स प्रतिगन्तुमैहत ॥२८॥

महाभिमानान्धतमोभिरावृतो दुरन्तदर्पेण स दृप्तमानसः ।
जगत्समग्रं तृणवद् विभावयन् सदा हृदीत्थं समचिन्तयन्निजे ॥२९॥

मदन्यधन्यो न भुवस्तलेऽधुना नरेन्द्रमूर्धन्यमहामहीपतिः ।
क ईक्ष्यते मादृशचक्रवर्त्तिताऽनुयुक्तसाम्राज्यसुखानुभूतिमान् ॥३०॥

अतीतसंख्या महनीयभूभृतो मदीयपादाङ्गुलिजां नखद्युतिम् ।
महार्घ्यचञ्चत्स्वकिरीटरत्नजप्रभाभिरर्चन्ति समेधयन्ति च ॥३१॥

अरण्यतोऽरण्यमुपागताः सदा विपूतिमद्वल्कलवस्त्रधारिणः ।
असह्यमौष्ण्याम्बुहिमं सवातकं निषेव्य दिष्टयाऽद्य चरन्ति पाण्डवाः ॥३२

अनन्तसद्वैभवशालिना मया स्वकीयसम्राड्मुकुटं सरत्नकम् ।
अमूल्यवस्त्राभरणं च बिभ्रताऽद्य तेऽवलोक्या ननु नग्नमूर्त्तयः ॥३३॥

निरीक्ष्य तान् भिक्षुकवेषमाश्रितान् भुवीह यादृक् सुखमाप्नुयामहम् ।
न तत्सहस्रांशसमं ह्यपि ध्रुवं प्रशस्तमाहेन्द्रपदप्रतिष्ठितः ॥३४॥

विचिन्त्य चेत्थं हृदये सुयोधनः समेत्य दुःशासनकर्णमातुलान् ।
स मन्त्रयित्वा सह तैस्ततः परं प्रचक्रमे वक्तुमिदं स्वजन्मदम् ॥३५॥

गवां निजानां गणनेच्छया मया ययासुना द्वैतवनेऽद्य भूयते ।
तदर्थमादिश्य समित्रबान्धवं स्वमाज्ञया मामनुकम्पय प्रभो ॥३६॥

निजस्य सूनोः कुटिलस्वभावविन्नचान्ववजानात्तमसौ नरेश्वरः ।
तदाग्रहग्राहगृहीतमानसो ददावनुज्ञां स्वसुतेऽतिविह्वलः ॥३७॥

धृतेद्धरत्नाङ्कितवस्त्रभूषणः सुचोष्यलेह्याद्यपदार्थसंयुतः ।
विभिन्नतौर्यत्रिकवेदवित्तमैरगादसौ तत्र सहेन्द्रजालिकैः ॥३८॥

निजेन्द्रियानन्दकरान् सहस्रशोऽवभुज्य भोगान् स सनृत्यगीतकान् ।
मृगव्यसत्रव्यसनो निजैः समं सुहृद्भिरन्यैश्च निनाय वासरान् ॥३९॥

अथैकदा द्वैतवनान्तरे लसत्सरोवरप्रान्तमुपेत्य दुर्मतिः ।
सबान्धवस्तत्र विहारमाचरद् धृतव्रता यत्र वसन्ति पाण्डवाः ॥४०॥

स तत्र भूयो विजिहीर्षया निजैः सुहृद्भिरासादयितुं समं सुखम् ।
निदिष्टवान् दासजनांश्चिकीर्षितुं विलाससौख्यप्रदमण्डपान् बहून् ॥४१॥

स्वबान्धवैश्चित्ररथः समन्वितः समस्तगन्धर्वपतिर्महाबलः ।
अवस्थितस्तत्र विहारमाचरन् विलोक्य दासानसकावताडयत् ॥४२॥

सुयोधनो दासविपत्तिवार्त्तया विषण्णचेताः पृतनाभिरन्वितः ।
द्रुतं प्रदुद्राव स वैरिणोनृपः बलावलेपः स्मृतकर्णपौरुषः ॥४३॥

महारणं चित्ररथेन कुर्वतः सुयोधनस्यास्य समस्तसैनिकाः ।
प्रताड्यमानाः किल देवयोनिभिः प्रदुद्रुवुः संगरमध्यतो भयात् ॥४४॥

भवन्ति गन्धर्वजनास्तु मायिनो धराचराश्चापि वियच्चरास्तथा ।
भवेत्कथं योद्धुममीभिरीश्वरी यशस्करी चापि च भूचरी चमूः ॥४५॥

प्रसिद्धतेजा वसुषेण एककोऽप्यगण्यगन्धर्वगणानमर्दयत् ।
न तस्थुरेतस्य पुरो रणाङ्गणे न केऽपि विद्याधरयक्षकिन्नराः ॥४६॥

ततोऽनुदच्चित्ररथः स्वसैनिकानशेषमायाचणवेदविश्रुतान् ।
समापतन् कर्णमिमे महौजसो विचित्ररूपाणि च कोटिशो दधुः ॥४७॥

विभिन्नविष्वक् प्रसरत् स्वमायया॒ऽभ्युपेत्य कर्णस्य निपातितो रथः ।
अजानतस्तस्य च सारथिर्हतो धिगस्ति तान् ये युधि बिभ्रति च्छलम् ॥

रणाच्च कर्णे ह्यपवाहितेऽरयः सुयोधनं तस्य सहायकानपि ।
प्रधर्षयन्तो वियतः पथाऽद्ग्यं विनिन्यिरे स्वौक इमे च तत्स्त्रियः ॥४९॥

ततो नृपाभ्यर्णमुपेत्य सेवकाः सुयोधनस्य प्ररुदन्त उच्चकैः ।
न्यवेदयन् स्वप्रभुदुर्दशामिमां तदाऽभवद् धर्मसुतोऽतिदुःखितः ॥५०॥

निशम्य तद्वृत्तमसौ समाकुलः स्वबान्धवांस्तत्क्षणमादिदेश ह ।
सुयोधनं तत्सुहृदं च तत्स्त्रियो विमोचयध्वं द्रुतमेव गच्छत ॥५१॥

वृकोदरस्यानुमतं न तद्वचो युधिष्ठिरोऽवोचत सूनृतं तु यत् ।
विबोधयन् भीममनेकधा नृपोऽभ्यधात्पुनस्तं स गभीरमुद्रया ॥५२॥

परस्परं नो यदि विग्रहो भवेत्तदा वयं पञ्च शतं च कौरवाः ।
परैस्तु युद्धे समुपस्थिते सति शताधिकाः पञ्च वयं भवेम हि ॥५३॥

कुलं न भिन्नं न तथैव गौरवं विभिद्यते नः कुरुवंशजन्मनाम् ।
यदाऽत्र कश्चिन्निकृतो भवेत्तदाऽन्वयप्रतिष्ठा न न नाशमाप्नुयात् ॥५४॥

प्रबोध्यमाना इति धर्मसूनुना समेऽपि संहत्य तदीयबान्धवाः ।
प्रचक्रिरे तैः सह भीमसंगरं ततोऽमिलच्चित्ररथो धनञ्जयम् ॥५५॥

सखा स गन्धर्वपतिः पुरातनोऽर्जुनस्य दुर्योधनमत्यजद् गिरा ।
सदारकं चापि सबान्धवं तदा विलज्जितो मर्त्तुमसौ समुद्यतः ॥५६॥

स आत्मघाते कृतनिश्चयो नृपोऽध्वनि प्रयान्तं वसुषेणमैक्षत ।
तमुक्तवानाप्य निकारमीदृशं न जीवनं रक्षितुमुत्सहेऽधुना ॥५७॥

इदं समाख्याय स बान्धवं लघुं स्वराज्यकार्यं निखिलं व्यबोधयत् ।
सुहृत्समूहं परिरभ्य वक्षसा कुशासनं प्राविशदन्नमत्यजत् ॥५८॥

विकर्णदुःशासनकर्णमातुलादयस्तथाऽन्येऽप्यनुजीविनो नराः ।
यदा विबोध्यापि न सिद्धिमाप्नुवंस्तदा तदीयेऽध्वनि गन्तुमुद्यताः ॥५९॥

मृतिं गतेऽस्मिन् नृपतौ सुयोधने सुपर्वपक्षः प्रबलश्च दुर्बलाः ।
वयं भविष्याम इतिस्म दानवा विचिन्त्य यज्ञं ह्यनुतस्थुरद्भुतम् ॥६०॥

क्रतौ तु तस्मिन् मनुजप्रभावतो विचित्रकृत्याऽऽप्तजनुर्विनिर्गता ।
तयाशु संप्रेषितया दितेः सुताः सुयोधनं दानवलोकमानयन् ॥६१॥

व्यबोधयंस्तं त्वमिहात्मभीरुतां त्यजाशु दैत्याः किल कोटिशोऽधुना ।
नृलोकमासाद्य नरेन्द्रविग्रहेष्ववस्थितास्त्वद्धितमाचरिष्यवः ॥६२॥

गुरोश्च भीष्मस्य कृपस्य चान्यभूभृतां शरीरेषु वसन्ति दानवाः ।
यतः स्वकीयान् मनुजांश्च निर्दयं निपातयिष्यन्ति रणाङ्गणेषु ते ॥६३॥

स कर्णदेहे नरकासुरोऽवसत् प्रणोदितस्तेन दिनेशनन्दनः ।
विहाय चिन्तां स्वजनानधिष्ठितां विधास्यतीन्द्रस्य सुतेन विग्रहम् ॥६४॥

बलं यथा निर्जरसां युधिष्ठिरस्तथैव नश्चापि बलं भवे भवान् ।
प्रयाहि वैक्लव्यमपास्य संगरं विधेहि सन्मङ्गलमाप्स्यसि ध्रुवम् ॥६५॥

विबोध्य चेत्थं दनुजैः सुयोधनं सुनिर्भयं तं च विधाय सूक्तिभिः ।
पुनस्तथैवाशु तयैव कृत्यया तदास्पदं प्रापित एष भूपतिः ॥६६॥

प्रभातकाले धृतराष्ट्रजं नृपं नताननो बद्धकरः पुनः पुनः ।
निजास्त्रशस्त्रं परिगृह्य शत्रुहा प्रतिश्रुतिं स्वां वसुषेण ऐरयत् ॥६७॥

अये सुहृत् त्वत्पदपङ्कजं स्पृशन्नृतं वदत्येष जनो न चान्यथा ।
स्वशक्तिमाश्रित्य वरीयसीं मया धनञ्जयेन प्रधनं करिष्यते ॥६८॥

निशम्य भूपः किल कार्णिकं वचो विमृश्य तद् यद् दितिजैरुदीरितम् ।
निजाशनं चानशनं विहाय स प्रतिष्ठमानः पुरमाप हस्तिनः ॥६९॥

सुयोधनोदन्तममुं पितामहः समस्तमाकर्ण्य स कर्णसन्निधौ ।
स्वपौत्रमाहूय नरेन्द्रनन्दनं सुयोधनं वक्तुमिदं प्रचक्रमे ॥७०॥

हितप्रदं तात भुवीह भेषजं मनोहरं तापहरं न विद्यते ।
परं ह्युदर्के हितकारि कट्वपि निषेवणीयं विदुषा हितैषिणा ॥७१॥

गरीयसो मे जरयाऽतिजीर्यतोऽवधारय त्वं न वचोऽवधीरय ।
नराधमस्यास्य हि सूतसन्ततेर्विधीयतां तात न संगतिस्त्वया ॥७२॥

विकत्थतेऽयं ननु धर्मवत्तया सदैव शूरत्वमपि स्वकं भृशम् ।
प्रकाशयत्यत्र परन्तु भीतिभृत् त्यजन् भवन्त प्रपलायितो रणात् ॥७३

अहास्यदित्थ यदि नैष संगरे तदा न गन्धर्वपतिर्ह्य नेष्यत ।
पुरीं निजां त्वामिति चिन्तयन् हृदा मुखामृतं चित्तविषं त्यजत्विमम् ॥७४

सुहृत्तवास्ते वचनेन केवलं सदैव कर्त्तव्यपराङ्मुखोऽधमः ।
वृथाभिमानी ह्यकुलीनसम्भवो धनञ्जयं किं समरेऽभियास्यति ॥७५॥

इमं ध्रुवं कौरवपाण्डवारिता-प्रधानहेतुं गणयस्व भूपते ।
अपास्यतां दृष्टिविषस्य दंष्ट्रया क्षतो निजाङ्गुष्ठ इव प्रियोऽप्ययम् ॥७६॥

पितामहस्येति वचः सुयोधनो न चैव सुश्राव वचोऽमृतोपमम् ।
यथान्तकाले समुपस्थिते नरो विमन्यते सद्भिषजः सदौषधम् ॥७७ ।

अमन्यतासौ यदय हतप्रधीर्ब्रवीति वाच निखिलामनर्गलाम् ।
प्रकृष्टबुद्ध्या स नरो विहीयते जरासमाक्रान्तशिरा बुधोऽपि यः ॥७८॥

विभावयन् सूनृतसत्यवादिनं पितामह त प्रतिकूलमात्मनः ।
स कर्णमादाय ततः स्थलात् त्वरान्वितः प्रतस्थे विमनायितो गृहम् ॥७९॥

रवेः सुतः शान्तनयोक्तया गिरा निशातकुन्तक्षतहृद् बभूव सः ।
वरेण्यगान्धारनृपात्मजासुतं विवृद्धमन्युः समवोचदीदृशम् ॥८०॥

अये महाराज जरार्त्तिमद्वपुः पितामहोऽयं तव पाल्यतेऽन्धसा ।
परन्तु विद्वेष्टि भवन्तमात्मनो विपक्षपक्षं श्रयते ह्यहर्निशम् ॥८१॥

वदत्ययं मां खलु मित्रविद्विषं तथा च गन्धर्वभयात् पलायितम् ।
प्रतिश्रुतिं ते विदधे पुरःस्थितः शृणोतु विश्वं सनृदेवदानवम् ॥८२॥

प्रचक्रिरे दिग्विजयं तु पाण्डवाः समं मिलित्वा न विचित्रमस्ति तत् ।
सहायमन्यं परिहाय चैकको धरां विजेष्ये सकलामिमामहम् ॥८३॥

अये सुहृत् ते निखिलं भुवस्तलं विजित्य नूनं हि समर्पयिष्यते ।
समस्तभूमिस्थनृपेन्द्रमण्डलं त्वदर्थमेतत् करदीकरिष्यते ॥८४॥

प्रचण्डदोर्दण्डबलं च पौरुषं विभिन्नशस्त्रास्त्रनियोगकौशलम् ।
अशेषसंसारमहाब्धिमन्थनप्रभुत्वशक्तिर्मम दृश्यतां त्वया ॥८५॥

निशम्य कर्णस्य वचस्त्विदं नृपः सुयोधनो मोदपयोनिधौ पुनः ।
पुनर्न्यमज्जद्व्युदमज्जदात्मनः सुहृद्वरं कर्णमथालिलिङ्ग च ॥८६॥

गलत्परानन्दजबाष्पसन्ततिः प्ररुद्धकण्ठश्च सगद्गदस्वरम् ।
उवाच कर्णं तव मित्र संगति द्रुतं ध्रुवं मां हि कृतार्थयिष्यति ॥८७॥

ततस्तदानीं किल भूसुरोत्तमैः समोदमाशीर्वचनैः समर्चितः ।
अनेकबन्दीजनगीतसद्यशा मिलन् समैर्दिग्विजयाय निर्ययौ ॥८८॥

सदुत्तरां दक्षिणपूर्वपश्चिमा दिशो विजित्याथ समस्तभूभृतः ।
द्वितीयहीनेन हितेन तेन वै पराजितास्ते करदीकृतास्तथा ॥८९॥

अनन्तरत्नानि सुवर्णकूटकं विशिष्टसद्वाहनवस्त्रभूषणम् ।
अगण्यदासा अमिताश्च दासिका नृपाय कर्णः सुविजित्य चार्पिपत् ॥९०॥

दिनेशसूनोः परमं पराक्रमं निजाधिपत्यं च समस्तभूतले ।
महार्घ्यसद्वस्तुचयं विलोक्य च पृथासुतास्तेन जिता हि मेनिरे ॥९१॥

अथैकदैकान्तमुपेत्य भूपतिः सुयोधनः कर्णजमोदतुन्दिलः ।
उवाच तं मित्र ममापि मानसं विधातुमिच्छत्ययि राजसूयकम् । ९२॥

अजातशत्रोः किल यज्ञमद्भुतं निरैक्षिषि प्रोद्धतभूपसंकुलम् ।
ततः प्रभृत्यस्मि सदैव दुःखितो भजामि निद्रादिसुखं न किञ्चन ॥९३॥

समक्षमक्ष्णोर्मम धर्मजन्मनः सुनृत्यतीवाखिलवैभवं सदा ।
युधिष्ठिराद्प्यधिकः समादरो नृपैः कृतश्चेदहमाप्नुयां सुखम् ॥९४॥

सुहृद्वचस्तत् स महापराक्रमो निशम्य वारेश्वरनन्दनोऽवदत् ।
अवैतु पूर्णं स्वमनोरथं प्रभो न ते दुरापं भुवनेऽत्र किञ्चन ॥९५॥

नृपाः समस्तास्तव दासतां गतास्तवाङ्घ्रिपद्मे विलुठन्ति भूतयः ।
महर्त्विजो नोदय यज्ञवेदिकां विनिर्मितां कारय रम्यमण्डपाम् ॥९६॥

क्रतूपयोगीनि चिनुष्व सर्वतः समग्रवस्तूनि नृपान् निमन्त्रय ।
त्वदीययागोऽमितभूतिरग्रजस्य यागतश्चापि महत्तरो भवेत् ॥९७॥

स कर्णगीतामवकर्ण्य भूपतिः सुयोधनः कर्णरसायनीं गिरम् ।
अणीयसि स्वीयमनस्यनन्तकं दधे मुदब्धिं नु कथं न विद्महे ॥९८॥

तदर्थमापृष्टपुरोहितोऽवदन्न राजसूयेऽधिकृतिर्नृपेन्द्र ते ।
कुलेऽग्रजन्मैव करोति तत्क्रतुं न चानुजन्मेति हि शास्त्रनिर्णयः ॥९९॥

क्रतुं विधातुं यदि तेऽस्ति वासना विधेहि यज्ञं किल वैष्णवं नृप ।
अनूनमस्यापि महत्त्वमीरितं नृपेन्द्रसंसाधितराजसूयतः ॥१००॥

अशेषभूमण्डनराजमण्डलात् सुवर्णमाप्तं करदीकृतात्तु यत् ।
विचित्य तस्माच्च कण कणततो विनिर्मितः स्यादिह लाङ्गलोत्तमः॥१०१॥

विकृष्य तेनैव धरामनुत्तमां विधाय तत्रैव च यज्ञमण्डपम् ।
नरेन्द्रमुख्येन नरेन्द्रजन्मना विधीयतेऽय भुवि वैष्णवः क्रतुः ॥१०२॥

स एव यज्ञो भवता विधीयतां वयं सहाया इह ते भवेम हि ।
क्रतोर्विधानेऽस्य स ईश्वरो भवेत् समे नृपा यस्य वशंवदा भुवि ॥१०३॥

सुयोधनः सम्मतिमाप्य वेदवित्सुधीश्वराणां स्वविसारिणौजसा ।
क्रतुं समुत्साहितविश्वबान्धवः समापयामास स वैष्णवाभिधम् ॥१०४॥

समिद्धदारिद्र्यतनूनपान्नृणां तदीयजाम्बूनदसाधुवृष्टिभिः ।
स विश्वविष्वक्प्रसरद्भयङ्करः शशाम सर्वोऽपि समूलमञ्जसा ॥१०५॥

न तादृशः कोऽपि नरोऽवलोकितो धनेच्छया येन न शान्तिराप्यत ।
अशेषकल्पाख्यधराधरास्तथा सदा ह्यतिष्ठन्निह कामधेनवः ॥१०६॥

धनाप्तिसन्तुष्टमहर्त्विजोऽखिलाः सुसत्कृताश्चापि समे विपश्चितः ।
समानसत्कारभुजो महीभुजो विसृज्यमानाः स्वपुराणि भेजिरे ॥१०७॥

अथैकदाऽसौ वसुषेणमैरयत् पतिः कुरूणां परिदुर्मनायितः ।
सुहृद्वर त्वत्कृपया मया क्रतुः स वैष्णवाख्यः समनुष्ठितो महान् ॥१०८॥

अहं न यावन्नृपसूयसंज्ञकं क्रतुं विधास्ये किल विश्वविश्रुतम् ।
तव प्रसादेन महामहौजसो न तावदाप्स्यामि सुखं कदाचन ॥१०९॥

अशेषभूभृद्विजयैकहेतुकं भुनज्मि साम्राज्यमनन्तसौख्यदम् ।
परन्तु गन्धर्वपतेर्विमोक्षणापमानतः क्लिश्यति मे मनः सदा ॥११०॥

सुहृन्मनोभावमवेत्य वासरेश्वरात्मजो ह्यूर्ध्वभुजोऽब्रवीदिदम् ।
निहन्मि यावन्न कपिध्वजं रणे सुरां न सेवे पिशितं न चाप्यहम् ॥१११॥

पदं न चान्यैः किल धावयिष्यते न याचको वा विमुखीकरिष्यते ।
प्रवर्त्तते मे वशवर्त्ति वस्तु यद् ध्रुवं मया याचकसात्करिष्यते ॥११२॥

निशम्य कर्णस्य तथा प्रतिश्रुतिम् अपारदुर्योधनहर्षवारिधिः ।
तरङ्गमालाकुलितः समुद्बभौ विलङ्घ्य कूलं स्वमभूतपूर्वकः ॥११३॥

उदन्तमेतं नृपतिर्युधिष्ठिरः स्वकीयदूतस्य मुखाद् यदाऽशृणोत् ।
दिवा च शान्त्या निशि निद्रया तथा जहे यथा कामशरार्दितो जनः ॥११४

नृपः स कर्णस्य बलं पराक्रमं समस्तसंसारविजेतृ पौरुषम् ।
तदीयशस्त्रास्त्रनियोगकौशलं स्मरंस्तदानीं परिचिन्तितोऽभवत् ॥११५॥

न भोजनायाध्ययनाय वा श्रुतेर्न चापि सत्संगतये श्रुताय वा ।
न पञ्चयज्ञाय न कर्मणेऽन्यतो मनस्तदीयं स्पृहयाञ्चकार ह ॥११६॥

सदैव तस्यामृतिसूचकं नृपो ग्रहीतुकामः कवचं च कुण्डले ।
अजातशत्रुः स ऋतप्रियोऽप्यभून्निजादधर्म्यात्कुटिलप्रयोगतः ॥११७॥

एकः स्वार्थपरायणोऽपि बिभृते धर्मात्मतां मानवः
कश्चिद्धन्त निजप्रतिश्रुतिकृते प्राणाञ्जहाति प्रियान् ।
अन्योन्यप्रतिकूलतां श्रितवतोः पुंसोर्धरामण्डले
विद्वांसः स्वयमेव निर्णयत भोरुच्चावच तद्द्वयोः ॥११८॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये एकादशः सर्गः समाप्तः

—:०:—

## अथ द्वादशः सर्गः

जगदीश्वरमायया नु कीदृङ् ममतासंवलितो महागरीयान् ।
पितृपुत्रनिबन्धनोऽतिहृद्यो भुवि सम्बन्ध इह व्यरेचि चित्रः ॥ १ ॥

अमुमेव समाश्रयन् मनोज्ञं जगदास्थावरजङ्गमं समस्तम् ।
परिनृत्यति तद्ध्यनन्तकालात् सुखदं मायिकयन्त्रमास्थितं सत् ॥ २ ॥

परिचिन्तयते सदैव नूनं जनको नैजतनूजमङ्गलानि ।
भुवने न हि तादृशः पुमान् यः प्रतिकृत्या निजया न मोदमेति ॥ ३ ॥

परिवाञ्छति सर्वतो मनुष्यो विजयं स्वं जगतीतलेऽत्र सर्वः ।
परमेत्य पराजयं तनूजात् परिमोदं स समेति नात्र चित्रम् ॥ ४ ॥

हृदयादधिजायते तथैव जनिमाप्तस्तनयोऽङ्गतोऽङ्गतश्च ।
इति वेदवचःप्रमाणसत्त्वात् परिगीतस्त्विह पित्रभिन्नपुत्रः ॥ ५ ॥

सकलोऽपि जनः स्वभावतोऽस्यां निजजायोदरमाविशञ्जगत्याम् ।
समयं बहुमाप्य पुत्ररूपं परिधत्ते विति शाब्दिका वदन्ति ॥ ६ ॥

अत एव हि जन्मदस्य नैजे प्रणयस्त्वत्यधिको भवत्यपत्ये ।
असुरोऽपि सुरोऽपि वानरोऽपि कुरुतेऽधर्ममिहात्मजस्य हेतोः ॥ ७ ॥

अपि नाकपतिर्निजात्मजस्य कपिकेतोः प्रियतां विधातुकामः ।
प्रबभूव निरन्तरं स चिन्ताशतसन्तानवितानकैकतानः ॥ ८ ॥

विजयार्थमसौ स्वसूनवेऽदाद् विविधानेकमजेयदिव्यमस्त्रम् ।
तदपि प्रशशाम नैव चिन्ता मनसस्तस्य महोग्रकर्णनिघ्ना ॥ ९ ॥

वसुषेण इहास्ति सत्यवादी वितथा नैव कदापि तत्प्रतिज्ञा ।
विमुखीकुरुते न याचमानान् निजमभ्यर्णमुपेत्य भूमिदेवान् ॥१०॥

परिकल्प्य महीसुरस्य वेषं कवचं दिव्यमभौमकुण्डले च ।
यदि याचितुमेमि तत्समीपं न स ना नेति वदेत् कदापि वाचम् ॥११॥

अधुनावधि नैव कश्चिदेष क्षितिदेवं विमुखं तथा हताशम् ।
विदधे परियाचितः स्ववस्तु निखिलं ब्राह्मणसाच्चकार सद्यः ॥१२॥

प्रतियुध्य बलान्न कोऽपि शक्तः परिहर्तुं कवचं च कुण्डले च ।
अत एव हि याचनातिरिक्तं भुवने नैव विधेयमन्यदास्ते ॥१३॥

स्वहृदीत्थमसौ विमृश्य नाकाधिपतिर्भूसुरवेषमादधानः ।
कवचं च तथास्य कुण्डले च वसुषेणस्य वत ग्रहीतुमैच्छत् ॥१४॥

सकलं किल मायिनो मघोनो हृदयाकूतमवागमद्दिनेशः ।
अभवत् त्रिदशालयेश्वरस्य ह्यनया क्रूरसमीहया च खिन्नः ॥१५॥

प्रणयात्तनयस्य चेन्महेन्द्रो घृणितं कापटिकं करोति कृत्यम् ।
तदहं किमु नैव सविदध्यामुचितं कर्म तनूजमङ्गलाय ॥१६॥

सुरराजसमीहितं समस्तमहितं छद्मयुतं विगर्हणीयम् ।
द्रुतमेत्य निजात्मजाय नूनं वसुषेणाय मया निवेदनीयम् ॥१७॥

मनसीति विचिन्त्य वासराणामधिपो भूसुरलाञ्छनं दधानः ।
अधिगत्य निशीथकालमेष सुतसौम्यं शयनप्रकोष्ठमागात् ॥१८॥

उपधानवतीन्दुकान्तिकान्ते विमले पायसफेनसाम्यसौम्ये ।
परिरभ्य स नैजगाढनिद्रां शयनीये तनुजः शयान आसीत् ॥१९॥

शयितः खलु कर्ण ऐक्षतैकं पुरुषं धामनिधिं स भूमिदेवम् ।
वसुषेणमुदैरयत् स विप्रः परिगृह्यातिथिसत्कृतिं वरेण्याम् ॥२०॥

अयि कर्ण हितप्रदं तवाहं वचनं वक्तुमापागतोऽर्द्धरात्रे ।
वरभेषजवत् सुधोपमं तद् भवता कर्णपुटेन पेयमास्ते ॥२१॥

तव सन्निधिमीश्वरः सुराणां समुपस्थास्यति भूमिदेववेषः ।
विजयाय कपिध्वजस्य सूनोर्युधि ते हन्त पराजयाय तात ॥२२॥

यदि सोऽर्थयिता भवेत् समेत्य ह्युरसत्राणममुमे च कुण्डले ते ।
भवता न कदापि देयमेतदसुरर्चां परमं हि धर्ममाहुः ॥२३॥

इति रम्यवचो निशम्य कर्णो विनयेनातिशयेन सन्नताङ्गः ।
प्रतिवाचमुवाच विप्रमेनं परमाश्चर्यपयोधिमग्नचेताः ॥२४॥

अहमस्म्ययि भूमिदेवतानां चरणाम्भोजपरागधारणार्हः ।
निजमूर्धनि विश्ववन्द्यपादाः क्षितिदेवा हि ममैकवन्दनीयाः ॥२५॥

परमादरणीय पूजनीय मम सर्वस्व परेशवन्दिताङ्घ्रे ।
इदमेव निदेष्टुकाम आरात् किमु मां तत्रभवानुपस्थितोऽस्ति ॥२६॥

विदुषेऽविदुषेऽपि भूसुराय मम पार्श्वं समुपस्थिताय नूनम् ।
अपरस्य तु वस्तुनः कथा का परिदद्यामपि भिक्षते निजासून् । २७॥

निजवस्तु न भूसुराय देयं श्रुतिशूलायितमस्ति ते वचो मे ।
अयि भो भगवन् भवान् क आस्ते नियमाद् यो भुवि मां पृथक् करोति॥ २८॥

समुपेत्य ऋतप्रतिश्रुतेर्मां त्वमहो च्यावयसे कथं न जाने ।
किमु विग्रहवान् भवान् नु धर्मो य इहोपस्थितवान् परीक्षितुं माम् । २९॥

अतिवृद्धतमस्तपस्विवेषो मम कल्याणपरो भवान् क आस्ते ।
प्रणयातिशयं कथं तनूजे पितृवत् त्वं मयि संविभर्षि देव ॥३०॥

इति कर्णवचो निशम्य तिग्मद्युतिधामा पुनराह नैजसूनुम् ।
जनकस्तपनोऽस्म्यहं त्वदीयो न हि संशीतिरिहास्त्वणीयसी ते ॥३१॥

वचनं तदिदं ब्रवीमि सत्यं तव कल्याणमहं चिकीर्षुरस्मि ।
अयि वत्स न मे वचो जगत्यामिह कालत्रितयेऽप्यसत्यमास्ते ॥३२॥

यदि चेद् वचनं न मन्यसे मे पितरं मामपमन्यसे तदानीम् ।
न हितं समवाप्स्यसे कदापि त्वमहो हन्त विपत्स्यसे च नूनम् ॥३३॥

अतिनम्रतया ततः स कर्णोऽकथयद् देववरेण्य तिग्मरश्मे !
तव दुर्लभ-पूत-पुण्यधाम्नि चरणाब्जे भ्रमरायतां शिरो मे ॥३४॥

भुवि धन्यतमो भवामि नूनं सफलं जीवनमङ्ग मेऽद्य जातम् ।
भवदागमनेन चाभुवोऽहं बहुमानास्पदमस्मि मानवेषु ॥३५॥

भगवन् समुपासकस्तवाहं त्वमिहैको मम जीवनावलम्बः ।
भवदन्यमहं त्रिदेवपूज्यं कमपि स्वप्नमितोऽपि नैव जाने ॥३६॥

भुवनत्रयवन्द्यपादपद्म　मम　कल्याणकृते　मदीयसद्म ।
भवता समलङ्कृतं दयालो न च मे गौरवकारणं ततोऽन्यत् ॥३७॥

अयि तात महोपकारकारिन् सततं मानसमन्दिरे विहारिन् !
भवता स्वसुतो निजप्रतिज्ञाविमुखो नैव कदापि संविधेयः ॥३८॥

भुवनेऽत्र यथा बिभेम्यसत्यान्न तथाहं समुपस्थिताच्च मृत्योः ।
अनृतं वरपातकं पुराणस्मृतिवेदेषु मतं महत्सु चापि ॥३९॥

वसुषेणवचोभिरिद्धमन्युः　पुनरूचे　प्रभुरेष　वासराणाम् ।
अनृतस्य ऋतस्य निर्णये तेऽधिकृतिर्नास्त्ययि पुत्र मत्पुरस्तात् ॥४०॥

मनसा वचसाऽथ वा प्रयुक्तं न च सत्यं सुधियो विनिर्णयन्ति ।
परिणामहितप्रदं यदास्ते तदिदं सत्यमुशन्ति विज्ञवृद्धाः ॥४१॥

यदि तेऽभिमतं वरं तथापि धरणीदेवकृते तव प्रतिज्ञा ।
अयमस्ति शचीपतिः सुरेशो न हि विप्रो भवताऽवधेयमेतत् ॥४२॥

कपटी छलमाश्रयन्नसत्यः　परकीयाभ्युदयं च यो विरुन्द्धे ।
अमरेशो न च भूसुरः खरः किं विधृतव्याघ्रपरिच्छदो मृगेन्द्रः ॥४३॥

निगमागमतत्त्वपारदृश्वा　कृतविद्वद्वरसंगतिः　कृती　च ।
त्वमये स्वयमेव चिन्तयस्व भवसि भ्रष्ट ऋतात्प्रतिश्रुतात्किम् ॥४४॥

भवतो हठधर्मता न साध्वी प्रतिपद्यस्व हितं वचः पितुर्मे ।
वनमीयुरहो पितुर्गिराऽन्ये बहवोऽसूनपि मेनिरे तृणाय ॥४५॥

निजपैत्रनिदेशवर्त्तितैव पितृसेवा तनयस्य चास्ति साध्वी ।
वचनेऽप्यवमानिते पितॄणां भविता हन्त कथं नु पुत्रकाम्या ॥४६॥

कवचे त्वथ कुण्डले शरीरे स्थिरतां यावदिहाङ्ग बिभ्रते ते ।
न हि हन्तुमहो यमोऽपि शक्तो मृतधर्मा मनुजः कथं समर्थः ॥४७॥

कनकानि महार्घ्यरत्नराशीनपि भूमीः सकलं निजं च राज्यम् ।
निखिलं ननु भिक्षवे प्रदेयं कवचं दिव्यमुभे च कुण्डले न ॥४८॥

यदि दास्यसि मद्वचोऽवमत्य समरे त्वां हि हनिष्यतीन्द्रसूनुः ।
वरणीय इहास्ति नैव मृत्युर्भवता मङ्गलमीप्सुना कदापि ॥४९॥

गिरमित्यवधार्य कर्ण ऊचे मयि पुत्रे प्रणयो महांस्तवास्ते ।
भवदुक्तवचो नितान्तरम्यं परमप्रीतियुतं च नीतिगर्भम् ॥५०॥

पितृदेव तथापि मानस मे भगवन् निर्णयमेव संसरीति ।
कपिकेतुभयं न विद्यते भो व्यथते हृन्मम सत्यभङ्गभीत्या ॥५१॥

शयितोऽपि पुरा हरिः स चन्द्रः कृतवानास निजां च यां प्रतिज्ञाम् ।
तृणवन्निजपुत्रदेहदारान् परितत्याज तदीयपूर्त्तिमिच्छन् ॥५२॥

बलिना छलितेऽपि वामनाय वसु राज्यं सकलं तथात्मदेहः ।
गुरुणा विनिवारितेन चापि सुयशःकामनया समर्पितानि ॥५३॥

अदसीयपितामहोऽपि भक्तप्रवरो ह्यात्मनिपातभीतिभीतः ।
जनकस्य निदेशमुल्ललङ्घे भुवि सत्कीर्तिमनश्वरीं प्रपेदे ॥५४॥

अथ भीष्मपितामहोऽपि वन्द्यो विहितां तां भुवि चात्मनः प्रतिज्ञाम् ।
गुरुणापि च भार्गवेण सार्द्धं युयुधे पालयितुं त्विदं प्रसिद्धम् ॥५५॥

अपरे बहवोऽपि विज्ञवर्या भुवनेऽकीर्तिभयान्निजां प्रतिज्ञाम् ।
परिपालयितुं स्वजीवनेन सह सर्वस्वमिहार्पयन् सुखेन ॥५६॥

तनयेन पितुर्निदेशनेन परिहेयं ननु लोष्टवद् वपुः स्वम् ।
भविता यदि तेन चेत्कलङ्कस्तदहो तस्य विमाननैव युक्ता ॥५७॥

इति वाचमुदीर्य वीरकर्णः पितृदेवस्य वरेण्यपादपद्मे ।
निपपात जगाद भूय इत्थं न पितश्चालय मां प्रतिश्रुतात्स्वात् ॥५८॥

भवतश्चरणौ शपेऽहमद्य यदि मामिन्द्र उपागतोऽर्थयेत ।
कवचश्रुतिभूषणानि दद्यां मरणाद् वा अतिरिच्यतेऽपकीर्तिः ॥५९॥

अपि भूधरसानुतः पतेयं ज्वलदग्न्यर्चिषि भस्मसाद् भवेयम् ।
भवतो हि निदेशमाप्य किन्तु निजसत्यान्न कदापि सञ्चलेयम् ॥६०॥

धृतगाण्डिवधन्वरक्षणार्थं यदि मां वञ्चयितुं त्रिविष्टपेशः ।
उपयास्यति तर्हि नूनमेष स्वयमायास्यति वञ्चनां विगर्ह्याम् ॥६१॥

मम चाभुवनाद् वरेण्यकीर्त्तिः शरदः पूर्णविभावरीशशुभ्रा ।
विकसिष्यति किन्तु नाकनाथो भविता हन्त कलङ्कितो जगत्याम् ॥६२॥

इति वाचमुदीरयन्तमेनं तनयं भूय उवाच तिग्मरश्मिः ।
यदि पुत्र न मन्यसे दद्स्व परमर्थ्या भवताऽप्यमोघशक्तिः ॥६३॥

न कदापि मृषास्ति तत्प्रयोगो ह्यधिगच्छेद् यदि तां भवान् सुरेन्द्रात् ।
अनयैव निजानसूनरिभ्यः परिरक्षिष्यसि सम्परायमध्ये ॥६४॥

भुवनत्रयदीपकस्तदानीं प्रतिपन्ने तनये निजं निदेशम् ।
शयनीयशुभप्रकोष्ठतस्तत्परमन्तर्हितिमाप सुप्रसद्य ॥६५॥

उषसि प्रतिबुद्धवान् यदाऽसौ परमाश्चर्यमगाद् दिनेशसूनुः ।
निजसान्ध्यविधिं समाप्य नैशं तमुदन्तं तरणिं समभ्यपृच्छत् ॥६६॥

अहमेव समागतः क्षपायां तव कल्याणकृते तनूज सुप्तौ ।
वचनं समुदैरयं हितं ते ध्वनिरेषोऽम्बरतः समुच्चचार ॥६७॥

तस्माद्दिनात्स महता कुतुकेन युक्तो धीरो दिनेशतनयो महनीयकीर्तिः ।
चिन्तातुरः प्रतिदिनं जगदेकवीरश्चक्रे शचीपतिशुभागमनप्रतीक्षाम् ॥६८॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये द्वादशः सर्गः समाप्तः

—:०:—

## अथ त्रयोदशः सर्गः

अरुणिमसमयेऽवबुध्य रम्ये निजनिखिलं सुसमाप्य नित्यकृत्यम् ।
शुचिमति तटिनीतटे सुराणामनुदिनमैनसुतः प्रतिष्ठते स्म ॥ १ ॥

विमलसुरसरित्पयोऽवगाह्य श्रुतिमनुभिः परिपूतसर्वगात्रः ।
परिधृतवरकौशवस्त्रयुग्मः सविधि स सान्ध्यविधिं स्म संविधत्ते ॥ २ ॥

दिनकृदभिमुखं विराजमानो मनुममलं निगमस्य सारभूतम् ।
अहरहरिह संजपन्नुपांशु निरलस एष निनाय मध्यमह्नः ॥ ३ ॥

चलति दिनपतौ दिशि प्रतीच्यां समुपगते प्रहरे तृतीयके च ।
निजभवनमुपेत्य भोजयित्वाऽतिथिजनमागतमाददेष नित्यम् ॥ ४ ॥

समनिगमवरेण्यमन्त्रराजं परिजपतोऽस्य समक्षमागतेन ।
इह धरणिसुरेण केनचिद् यदभिमतमर्थितमर्प्यते तदेव ॥ ५ ॥

निजनियमदृढं नरेन्द्रकर्णं सुरुचिरभूसुरवेषमादधानः ।
कुटिलमतिशचीपतिः समागात्कवचमथार्थयितुं च कुण्डले च ॥ ६ ॥

तृणलघुरिव गण्यते कुबेरो यदि च बिभर्त्ति स भिक्षुकस्वरूपम् ।
त्रिभुवनपतिरीश्वरः समेषां नृपबलियज्ञमुपेत्य वामनोऽभूत् ॥ ७ ॥

धनपतय इहर्द्धिमर्थयन्तो भुवि बत दैन्यमुपाश्रयन्ति निन्द्यम् ।
सुरपतिरपि सोऽर्थनेऽस्ति दीनः किमिव हि दुःखमतः परं जगत्याम् ॥८॥

जनयति तनयं निकृष्टमोहः प्रबलतरं वरमंहसां निदानम् ।
गुणगणकवले नितान्तदक्षं प्रसृमरकीर्त्तिविनाशकं हि लोभम् ॥ ९ ॥

अमुमधिवसतो महीयसोऽपि पृथुलयशः समुपेयुषो नरस्य ।
अधिभुवनमनश्वरापकीर्त्तिः प्रसरति नूनमघौघसर्गहेतुः ॥१०॥

गुणनिधिरपि लोभपापलिप्तः क्वचन न निर्भयमास्थितः प्रसीदेत् ।
जगति च निखिलेऽपि तस्य शङ्का समुदयते हृदये मलीमसाढ्या ॥११॥

त्रिदशपतिरमुष्य याचनार्थं समुपगतो वसुषेणकस्य पार्श्वम् ।
स च निगमवरेण्यसारभूतं स्म जपति मन्त्रवरं तदोर्ध्वबाहुः ॥१२॥

सुरपतिरभवत् क्वचिन्निषण्णो जपसमयान्तमसौ प्रतीक्षमाणः ।
मनुजपमखिलं समाप्य कर्णः सुरसरितः पयसः स निर्जगाम ॥१३॥

समुपगतमिमं गृहीतविप्र-कपटकलेवरवज्रिणं विलोक्य ।
अपचितिमुचितां विधाय कर्णो ह्यतिथिहित वचनं स चेत्थमूचे ॥१४॥

अयि महितपदाब्ज भूसुरेन्द्र किमिव हितं विदधामि तेऽधुनाहम् ।
तव चरणरजो निरीक्ष्य चित्त मुदमुपयाति महीयसीं ममाद्य ॥१५॥

अभिलषसि नु किं सुवर्णराशिं किमुत धनान्यथ गाः पयः क्षरन्तीः ।
जनपदवरमृद्धिमद्व्यसंख्यं स्विदसख्यातसदारकांश्च दासान् ॥१६॥

यदि परममनोहरस्वरूपं भृकुटिविलासचमत्कृतत्रिलोकम् ।
धरणिसुरकन्यकासहस्रमभिलषितं तव चेत्तदर्थयस्व ॥१७॥

अभिमतसुखवस्तु यत् त्वदीयं त्रिभुवनसंस्तुतमप्यनन्यलभ्यम् ।
इह ननु समयेऽर्थितं त्वया तन्निखिलमहं भवदङ्घ्रिसात्करिष्ये ॥१८॥

कथमपि भवता न चिन्त्यमेतद् यदिदमिहार्थितवस्तु सैष कर्णः ।
प्रियतरमसुतोऽपि मामकीनं धरणिसुराय न चार्पयिष्यतीति ॥१९॥

यदिह भुवि मदीयवस्तुजातं यदपि च मामकविक्रमेण लब्धम् ।
सकलमपि च भूसुराय नूनं समुपगताय निजार्थिने प्रदास्ये ॥२०॥

मम निकटमुपेयिवान् किमर्थं सममपि संशयमात्मनो विहाय ।
वद निजमखिलं मनोभिलाषं ध्रुवमहमेष तमद्य पूरयिष्ये ॥२१॥

वचनमिति निशम्य विप्रवेषस्त्रिदशपतिः समुवाच वाचमित्थम् ।
अधिभुवनमशेषदानिधुर्य निकटमहं तव याचनार्थमागाम् ॥२२॥

त्रिभुवन इह ते हिमांशुशुभ्रा प्रसृतवती विमला वरेण्यकीर्त्तिः ।
वितरणममृतं निषेव्य तेऽद्य निखिलमहीसुरवृन्दमङ्ग तृप्तम् ॥२३॥

तव निगदितसर्ववस्तुमध्ये मम न च कोऽपि पदार्थ इष्ट आस्ते ।
अभिलषितमहो यदस्ति वस्तु तदिह मुदार्पयितुं भवान् न शक्तः ॥२४॥

गिरमिति जगतीसुरप्रयुक्तां सुनिशमयन् हृदयेऽतिसंविषीदन् ।
उदतरदमुमेष संविनीतः प्रवरतमोऽखिलदानिनां नराणाम् ।२५॥

द्विजवर तव संनिशम्य वाचं मम हृदयं भजतीह विक्लवत्वम् ।
निजनिखिलधनार्पणेन चापि समुदयते न मनागपि व्यथा मे ॥२६॥

द्विजचरणसरोरुहप्रसत्त्यै सपदि जहामि वसून्यसून समोदम् ।
अयि वद यदभीप्सितं तदद्य तव निखिलं वितरिष्यते प्रसह्य ॥२७॥

प्रतिवचनमिदं प्रपद्य विप्रः कपटतनुर्वसुषेणमित्यवोचत् ।
अभिलषसि यदा नु मे प्रदातुं कवचमुभे त्वथ कुण्डले प्रयच्छ ।२८॥

इति ग[illegible]दितवतस्त्रिविष्टपस्य मुखमधिपस्य समन्वितं ह्रियाऽभूत् ।
छलवदभिमतं निशम्य कर्णो निजहृदये परमं विनोदमापत् ॥२९।

विहसितवदनोऽवदत्स कर्णः किमिव हितं तव वस्तुनाऽमुना भोः ।
विगणय तदिदं मया प्रदत्तं नगरसहस्रमये लभस्व विप्र ॥३०॥

अनवसितधन सहस्रसंख्यैर्गृहपरिचारकमानवैरुपेतम् ।
सुरुचिरकलधौतमन्दिराणां शतकमनिन्द्यमये प्रतीच्छ मत्तः ॥३१॥

अतिशयरमणीयवस्त्रभूषाशतसहिताः कनकैर्लसद्विषाणाः ।
धृतरजतखुरा असंख्यधेनूः स्तननिकृतामृतसागराः प्रतीच्छ ॥३२॥

बहुविधवरभोगसाधनं वा सुखकरवस्तुसमूहमर्पये ते ।
चिरसुखमधिगच्छ तेन साधो कवचमिदं न गृहाण कुण्डले च ॥३३॥

यदि किल भवदर्थितं प्रदास्ये तदिह सपत्ननरो रणाङ्गणे माम् ।
ध्रुवमयि विनिपातयिष्यतीति किमु फलमस्ति तवानुकूलमस्मात् ॥३४॥

उदरकुहरतः स्वकीयमातुः परिधृतवानहमुद्गतो जगत्याम् ।
कवचमिदमुभे च कर्णभूषे त्वचि सुनिषक्तमदस्त्रयं ममास्ते ॥३५॥

कथमिव तदिदं प्रभो पदार्थत्रितयमहो भवते प्रदातुमीशः ।
अत इह भगवन् दयालुवर्य स्वहृदि विचारय सेवके दयस्व ॥३६॥

निखिलभुवनराज्यमस्तविद्विट् सुरपुरसौख्यमथाद्वयातपत्रम् ।
वितरितुमहमुद्यतोऽस्मि येन भवति चिरं सुखितो भवान् भवेऽस्मिन् ॥३७

तरणिसुतवचोऽवधार्य भूयो निजतनुजन्महितैकचित्तशक्रः ।
नरवरवसुषेणघातकामी व्यपगतलज्ज उवाच वाचमित्थम् ॥३८॥

स्पृहयति न च मे मनस्तु गोभ्यो न हि च सपत्नविहीनराज्यकाय ।
सकनकरमणीयसौधकेभ्योऽपि च न सदारकसेवकाचितेभ्यः ॥३९॥

किमपि च सुखवस्तु नान्यदीहे त्रिभुवनदुर्लभमप्यहो यदास्ते ।
यदि वितरितुमीहसे नरेन्द्र कवचमथ श्रुतिभूषणे ददस्व ॥४०॥

त्रितयमिदमये न दातुमिच्छा भवति यदा तव किं न सत्वरं माम् ।
वदसि नृपवरेण्य दानिधुर्य तव निकटाद्ध निराश आशु यायाम् ॥४१॥

तदनु स विहसन्नुवाच कर्णः कपटमते त्रिदशेश्वर त्वदीया ।
बत खलु निखिलापि धूर्ततेयं विदितचरी मम पूर्वतोऽस्ति निन्द्या ॥४२॥

अहमिह हि निजप्रतिश्रुतेर्भो विचलितुमस्मि न लेशतोऽपि शक्तः ।
अभिलषितमितः स्ववस्तु नीत्वा किमुत तवास्ति पलायनस्य वाञ्छा ४३

वितरितुमभिलाषि मे मनस्ते कवचमुभे अपि कुण्डले परन्तु ।
मदसुहितकृते त्वमोघमस्त्रं किमपि भवान् प्रतियच्छतु प्रसह्य ॥४४॥

त्रिदशपतिमुखं निरस्ततेजः समभवदीदृशकार्णिकप्रवृत्त्या ।
प्रतिनिगदितवानसौ तदानीं दिनकरपुत्रमिमं नृदेवकर्णम् ॥४५॥

तव परमगुरुर्दिनेश्वरोऽयं मम हृदयस्थसमीहितावबोधे ।
प्रभवति न ततोऽतिरिक्त ईशस्त्रिभुवनमध्यगतोऽस्ति कोऽपि देवः ॥४६

किमपि च वरमस्त्रमीहसे चेद् यदि च निजोपकृतेः समीहया त्वम् ।
कुलिशविरहितं तदर्थयस्व किमपि मदस्त्रसमूहतो यथेच्छम् ॥४७

दिनकरतनयोऽवदन्महेन्द्रं न हि तव वज्रमहं ग्रहीतुमीहे ।
विलसति तव या ह्यमोघशक्तिर्निकटमुपैति सहस्रशो निहत्य ॥४८॥

उपकृतिकरणार्थमुद्यताय यदि हि भवान् प्रतिदातुमुत्सुकस्ताम् ।
अहमपि भवतः समीहितं तत्त्रयमपि तुभ्यमरं समर्पयिष्ये ॥४९॥

क्षणमपि सुविमृश्य भूय इन्द्रः प्रतिवचनं निजगाद भीतचेताः ।
मम करविहिता तु सा सहस्रं भुवि विनिहन्ति च ते करप्रयुक्ता ॥५०॥

असुहरणकरी हि सैकशत्रोः पुनरपि मेऽङ्ग समीपमागता स्यात् ।
निगदितवचनं न मे वृथैतन्मनसि निजे भवता विचिन्तनीयम् ॥५१॥

भवतु च भवतोऽभिलाष एव जगति ममैकरिपोर्वधस्तु काम्यः ।
अयि वितर सुरेश तां स्वशक्तिं गिरमिति संनिजगाद भानुसूनुः ।५२।

अभिलषसि वधं कपिध्वजस्य हृदयमहं तव वेद्मि जिष्णुरूचे ।
परमिह न भवान् समर्थ आस्ते मम तनुजस्य निपातने कदापि ॥५३॥

त्रिभुवनपतिरीश्वरोऽस्ति यस्य मनुतनुजस्य सुरक्षणार्थमुत्कः ।
क इह भुवि नरोऽपि वाऽसुरोऽपि त्रिदशवरोऽपि च तद्वधे समर्थः ॥५४

प्रणिगदितमिदं सुरेश्वरस्य हृदि सुविभाव्य दिनेशनन्दनोऽसौ ।
वचनमिदमुदैरयन्महेन्द्रं त्वमयि समर्पय तां जहीहि चिन्ताम् ॥५५॥

व्यमृशदथ पुनर्द्युलोकनाथो निजहृदये ननु तामवाप्य शक्तिम् ।
अधिवनमुपगत्य सूर्यपुत्रो मधुरिपुसारथिमद्य संनिहन्यात् ॥५६॥

कथमिव वसुषेण एष इच्छेद् विजयमधर्ममुपाश्रितं नरेन्द्रः ।
निजरिपुविजयं विहाय धर्मं न हि परिवाञ्छति मानवो मनस्वी ॥५७॥

मनसि लघुतरे लघीयसी हि समुदयतेऽधमपूरुषस्य चिन्ता ।
सुरपतिहृदयेऽपि कर्णनिघ्न उदयमुपागतवानतः कुभावः ॥५८॥

रविसुतवचनं निशम्य जिष्णुः पुनरवदद् वसुषेण मृत्युतश्च ।
विरहितसमये प्रयोगमस्या यदि च विधास्यसि नङ्क्ष्यसि स्वयं हि ॥५९॥

अधिगतरणरङ्गभिन्नकाले निजसुसमिद्धसमास्त्रशस्त्रसत्त्वे ।
द्विषदसुहृतये न सा प्रयोज्या विपदमवाप्स्यसि चान्यथा त्वमेव ॥६०॥

तरणिसुत उवाच भूय इत्थं त्रिदशपते मृतिसंकटेऽहमेताम् ।
युधि समुपयुनज्मि नान्यकाले सरणिमृतां न कदापि संत्यजेयम् ॥६१॥

जननदिवसतो मदीयदेहस्थित-रुधिराप्लुतचर्मणैव साकम् ।
त्रितयमपि वरेण्यवस्तु चैतदतिशयशक्तमिदं भवान् सुवेद ॥६२॥

यदि तदहमये निकृत्य दद्यां विकृतिमवाप्स्यति मामकं शरीरम् ।
भवत इममतो वरं प्रयाचे मम न भवेद् विकृता शरीरशोभा ॥६३॥

वचनमिति निशम्य पाकशास्ता प्रमुदित इत्थमुवाच मत्प्रसादात् ।
विकृतिमुपगतं च ते शरीरं भवतु शुभं न विरूपतां प्रयातु ॥६४॥

पुनरपि तव पूर्ववत् सुवर्णसुमसृणसौम्यवरेण्यकान्तिगेहः ।
दिनमणिरिव सुप्रकाशमानो हृदयहरः सततं विभातु देहः ॥६५॥

अथ शितकरवालमाकलय्य सुखद-शरीरनिषक्ततत्त्रयं हि ।
वरकवचमुभे च कर्णभूषे सपदि निकृन्तितुमेष संप्रवृत्तः ॥६६॥

निजकवचनिकृन्तनप्रवृत्तदिनपतिवीरसुताननस्य कान्तिः ।
व्यक्तसदतिशयं प्रसन्नताया वदनमुपागतवान् वरेण्यभावः ॥६७॥

कृतमिदमवलोक्य देवमर्त्यदनुकुलजाश्चकितत्वमभ्युपेताः ।
सुववृषुरमराः सुमानि तस्मिन् सुननृतुरप्सरसां गणास्तदानीम् ॥६८॥

निखिलमपि सुपर्वमण्डलं तद् दनुजनरेन्द्रमुनीन्द्रसङ्घजुष्टम् ।
विजयरवमनेकशश्चिराय प्रतिवसुषेणमुदैरयत् समोदम् ॥६९॥

कवचमहह कुण्डले निकृत्य रुधिरचयं वमतोऽपि नैजदेहात् ।
सुरपतिकरसाच्चकार सत्यप्रियमनुजोऽयमहो महामहीयान् ॥७०॥

अयमथ वसुषेणनामधेयः प्रथममभूदतितिग्मरश्मिसूनुः ।
तत इह दिवसात्तु कर्णभूषा-कवचनिकृन्तनतोऽभवत्स कर्णः ॥७१॥

वीराग्रगण्य निखिलोद्गतदानिधुर्य धन्यस्त्वदन्य इह कोऽस्ति पुमाञ्जगत्याम्
धर्मात्मजादिभिरुपेन्द्रमहेन्द्रवर्यैः छद्म श्रितैर्ननु गत परिवञ्चितत्वम् ॥७२

वीरो भवानमरकीर्त्तिमवाप लोके गायन्ति ते रिपुगणा अपि पुण्यगाथाम् ।
त्यागित्वसत्यनिरतत्वदृढप्रतिज्ञासंपालनत्वमितरत्र नरेऽस्त्यलभ्यम् ॥७३॥

हे श्लाघनीय गुणमन्दिर सत्यसेविन् कृष्णादिसंशितयशा अभिनन्दनीय ॥
त्वद्वञ्चनार्थमुपढौकितवान्महेन्द्रः सैष स्वयं नु परिवञ्चिततां गतोऽभूत् ॥७४

प्राणान्प्रियान्यदि सुरक्षितुमत्रलोके भानोर्निदेशमथचेत्त्वमपालयिष्यः ।
सूर्यः पिता तव तथा न च तोषमैष्यद् यादृक् प्रसीदति तरां स च तेऽङ्ग कीर्त्या

पुत्रे निजे तु ममता जनकस्य नूनं सर्वस्य सम्भवति किन्तु गुणप्रकर्षात् ।
मोमुद्यमानहृदयो ह्यभिनन्दति त्वां पुत्र वरं सततधर्मपरं दिनेशः ॥७६॥

नीत्वाऽगाद्देवराजोऽविरतमपि सुधावर्षिणी कुण्डले द्वे
वक्षःसंसक्तमेतत् कवचमतिदृढ़ यत् त्रिलोकेष्वभेद्यम् ।
स्वीयामेकघ्नशक्तिं कपटपटुरदात् तत्समाकर्ण्य भूयान्
खेदोऽभूत् कौरवाणामधिहृदयमहो पाण्डवानां प्रमोद ॥७७॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये त्रयोदशः सर्गः समाप्तः

—:०:—

## अथ चतुर्दशः सर्गः

सदसि ते कौरवैर्द्यूतसंनिर्जिता ऋतपराः पाण्डवाः स्वप्रतिज्ञादृढाः ।
वनमिता यापयित्वाऽर्कसंवत्सरांस्त्र्यधिकदिक्सम्मितोऽब्दो यदोपस्थितः ।

मनसि तेऽचिन्तयन् यद् वयं साम्प्रतं परिहृतस्वीयवेषाः स्वरूपान्तरम् ।
कपटमालम्ब्य कुत्रापि राज्ञो गृहे भृतकतामाप्नुयामापदं संश्रिताः ॥२॥

नृपविराटालये ते तदोपस्थिताः प्रविलपन्तश्च पाण्डोः सुतानां प्रियाः ।
कृतिकराः साम्प्रतं तैर्विहीना वयं विपदि मग्ना इति प्राब्रुवन् क्ष्मापतिम् ॥३॥

प्रियगुणः सैष राजा विराटः प्रभुः समुचितं कर्म यस्यास्ति तस्मै च तत् ।
परिददौ तेन सर्वे प्रमोदान्विताः समवसन् वीक्षमाणाः स्वकालं शुभम् ॥४॥

यमसुतो द्यूतसंसत्सदस्योऽभवत् पवनपुत्रोऽशनाध्यक्षतां प्रापितः ।
सहपरो देव एषोऽपि गोपालने नकुलकोऽसौ नियुक्तोऽश्वसंरक्षणे ॥५॥

अमरपण्यस्त्रियः शापशप्तोऽर्जुनोऽगमदयं क्लीबतामेकसंवत्सरम् ।
वसतिमाप्तः स सानन्दमन्तःपुरे नृपतिकन्याश्च तौर्यत्रिक शिक्षयन् ॥६॥

द्रुपदपुत्री नरेन्द्रात्मदारालये प्रवरदासीत्वमाप्ताऽवसत् सुन्दरी ।
विदधती स्वात्मयोग्यां विविक्तां कृतिं सुजगृहे नाम नैजं च सैरन्ध्रिकाम् ॥७॥

नृपवरस्यालकः कीचकाख्यो महाञ्जगति वीरोऽभवद् राज्यसेनापतिः ।
नृपतिसाम्राज्यसर्वस्वभूतस्तथा विजितवान् स त्रिगर्तादिदेशान् बहून् ॥८॥

द्रुपदपुत्र्याननप्रोज्ज्वलद्दीपकप्रसरदर्चिःस्सु दुर्भाग्यतश्चैकदा ।
नरपतेर्वल्लभासोदरो दुर्मतिः पतितुमैच्छन्न कामी शिवं वीक्षते ॥९॥

हितपरैर्बोधितो यज्ञसेनीतनौ वसति गन्धर्व एको बलीयानिति ।
भृशमयं किन्तु दुष्टः स नामन्यत मृतिवशः किं शृणोत्यात्मनीनं वचः ॥१०

अधम एष त्रपामध्यमासादयन् नृपतिपाण्डोः स्नुषायां कुदृष्टिं क्षिपन् ।
प्रबलभीमेन संयुध्य संसूदितो यमपुरं प्राप नैजासृगत्युद्वमन् ॥११॥

मरणमाप्ते च तस्मिन् नृपश्यालके निखिलमत्स्यप्रदेशे च देशान्तरे ।
प्रसृतवानास सर्वत्र हाहाध्वनिरवगता तस्य गन्धर्वनिघ्ना मृतिः ॥१२॥

कुरुपतिः पूर्णशक्त्यैव पाण्डोः सुतान् सततमेवोत्सुकोऽज्ञातवासस्थितान् ।
प रविचिन्वन् बहून् प्रेरयन् क्रूरधीर्विविधदेशेषु गुप्तान् निजांश्चारणान्॥१३॥

परमिमे पाण्डवा हस्तिनाम्नः पुरो निकटमेव स्थिता इत्यजानन् खलः ।
प्रयतमानोऽपि नावाप तद्वृत्तकं भवति दीपस्य नूनं तमोऽधः स्थितम् ॥१४

चरणशीलैर्नरैः कीचकस्याहतिं विदितवान् यर्हि दुर्योधनो दुर्मतिः ।
स्मृतवतः पूर्ववैरं त्रिगर्तेश्वराद्लभतेत्थं सुशर्माभिधात् सम्मतिम् ॥१५॥

बलविहीनत्वमाप्तोऽधुना मत्स्यराट् प्रवरवीरे हते स्वीयसेनापतौ ।
वयममुं संलुठामो मिलित्वा रिपुमिति वदन् मत्स्यदेशं सुशर्माऽद्रवत् ॥१६॥

नृपविराटेन तस्याभवत्सगरो निखिलरोमप्रहर्षो महानद्भुतः ।
नृपतिपाण्डोः सुतानां सुसाहाय्यतो विजित आस त्रिगर्तेश्वरो भूभृता॥१७॥

तदनु ते कौरवाश्चापि वीरोद्भटैः सह समेता विराटेश्वरं प्राद्रवन् ।
अगणिता गास्तदीया लुठित्वा निजं पुरमिमे प्रस्थिताः संबभूवुर्यदा॥१८॥

नृपतिगोमोचनेच्छुर्द्विषद्वधस्ततः सकलशस्त्रास्त्रसज्जः पृथायाः सुतः ।
प्रणिनुदन् संयतावुत्तरस्यन्दनं सपदि गाण्डीवधन्वा तदोपागमत् ॥१९॥

इह रणे वीरतामीक्षितारः समे चकिततामापुरेतस्य शूरार्दिनः ।
वचनमन्योन्यमूचुर्ध्रुवं क्लीवता-तनुधरो यो विभातीह सोऽस्त्यर्जुनः ॥२०॥

निशितबाणप्रयोगैरयं वैरिणां करगत धेनुवर्गं द्रुतं मोचयन् ।
सफलकामो भवन् हन्त नः पश्यतां निलयमेष्यत्यवश्यं वयं मन्महे ॥२१॥

वचनमाकर्ण्य कर्णो निजानां नृणां समरशूरः स आह स्म मा दीनताम् ।
भजत तं गुप्तरूपं रिपुं ह्यर्द्येऽर्जुन उताहो भवेदेष वा वृत्रहा ॥२२॥

भवत शान्ताः समालम्ब्य मौनं समे वसत चैकत्र युत्कौशलं पश्यत ।
मम तथैतस्य वीरस्य चान्योन्यकं विजयमाप्स्येऽभियास्याम्यहं केवलः ॥२३

इति वचः प्रोच्य युद्धं प्रकुर्वन्नसौ विदधदात्मास्त्रशस्त्रप्रयोगं रिपौ ।
रणमितान् कौरवान् द्रोणभीष्मादिकान् महति मोदाम्बुधौ पातयामास तान्

शरशतैरुग्ररूपैर्धनुर्निःश्रितैरशनिनिर्घोषवद्भिर्वरेण्यैर्निजैः ।
अयमपि क्लैव्यरूपं दधानोऽर्जुनो व्यथितवान् कर्णमेनं महाविक्रमः ॥२५

समर आसीन्महान् वीरयोरेतयोस्तनुभृतां रोमहर्षः पर दारुणः ।
वियति देवास्तथा दानवास्तं रणं ददृशुरागत्य तौ संशशंसुर्भृशम् ॥२६॥

उभयपार्श्वेऽपि दिव्यास्त्रशस्त्रं वरं स्थितमुभौ चापि विक्रान्तशूरौ समौ ।
प्रधनमन्योन्यमालक्ष्य मेने तयोः प्रलयकालः समीपस्थितो द्रष्टृभिः ॥२७

कति शशंसुर्भृशं कर्णमेन जनाः कति धृतक्लीववेषार्जुन तं तथा ।
विजयमिच्छ्वोर्मिथो हन्त सनिघ्नतोस्तरुणरक्तोत्पलाभां तनू जह्रतुः ॥२८॥

तदनुयुद्धं परित्यज्य गोचौर्यतो घृणितकार्याद् व्यरंसीत् सुतिग्मद्युतेः ।
तनुजन्नुर्यो व्यथाम्भोधिमग्नः पुमानवदधात्येव गर्ह्यं विधेयं निजम् ॥२९॥

प्रवरवीरो यदा कर्ण आयोधनादपगतस्तर्हि सर्वे जनाः संहताः।
गुरुवरो द्रोण एते च भीष्मादयो निजपतिप्रीतिकामा ययुः संगरे ॥३०॥

परमतिप्रेरिता ये विना स्वेच्छया किमपि कार्यं विधातुं भवन्त्युद्यताः।
सफलतायाः कथा दूरमास्तां सदा परिणतिस्तस्य बोभूयते हानिकृत् ॥३१॥

प्रथितवीरत्वमाप्तोऽपि लोकत्रये विजितवाञ्जामदग्न्यश्च यः संयुगे।
वशयमो द्रोण एषोऽपि हंहो जितो दुरितकर्माश्रितानां हि शोच्या गतिः

अवदधत्तूत्तरस्यानुजाया वचः प्रियतरायाश्च शिक्षाप्रदः प्रीतिकृत्।
युधि च सम्मोहनास्त्रं प्रयुञ्जन्नसौ विहितवान् कौरवान् बोधहीनांस्तदा ॥

अधिगतेष्वेषु सर्वेषु सम्मुग्धतां गुरुरसावुत्तरायाः स पुंस्त्वोज्झितः।
प्रणिजगादोत्तरं गच्छ मित्र द्रुतं वसनमानीयतां कौरवाणां वरम् ॥३४॥

गमनकाले च सग्रामकामस्य मे नृपतिकन्या तव प्रेयसी चानुजा।
अवददित्थं मदर्थे वरं वाससां ध्रुवमये कौरवाणां समानीयताम् ॥३५॥

वरतमैरंशुकैः पुत्तलीः कुर्वती चिरदिनं क्रीडितुं कामये मोदभृत्।
भगिनिका तेऽभ्यधान्मामतस्त्वं व्रज न हि विलम्बोऽत्र कार्यो विधावुत्तर

त्वरितमेवाभ्युपेत्योत्तरो दुर्हृदां वसनमाकृष्य गात्रेभ्य आश्वानयत्।
निजरथं प्राप वीरस्तदा कौरवाः प्रययुरात्मप्रबोधं दधुः कश्मलम् ॥३७॥

शुभमतिं प्राप्य पैतामहीं ते तदा ततिमपास्य प्रयाता गवां स्वं पुरम्।
विजयमाप्तौ प्रमोदाद् भृशं तुन्दिलौ नगरमेतौ च वैराटमाजग्मतुः ॥३८॥

जयरवोऽभून्महान् मत्स्यराष्ट्रेऽखिले निववृतुर्यर्हि सत्सारथिश्चोत्तरः।
पुलकितो मत्स्यराजः समालिङ्ग्य तौ शिरसि चाघ्राय मोमुद्यमानोऽभवत्

प्रकटमाप्तानिमान् पाण्डवान् भूपतिर्विनयगर्भैर्वचोभिः क्षमां प्रार्थयन्।
सदुपचारैश्च संपूज्य तान् स्वगृहे परममोदान्वितोऽवासयत् सादरम् ॥४०॥

परिणयं प्रापिता सा तदानीं सुता नृपतिना मत्स्यराजेन नैजी प्रिया ।
शुभदवारे सुभद्रात्मजेन स्वयमुभयवंशे समुज्जृम्भितं मङ्गलम् ॥४१॥

अधिगता पाण्डवानां प्रवृत्तिर्यदा दुरभिसन्धिः स दुर्योधनः प्रोक्तवान् ।
ध्रुवमिमे गुप्तवासाब्दकाभ्यन्तरे प्रकटिताः पाण्डवा यान्त्वरण्यं पुनः ॥४२

गणनया वित्तमानां सतां पाण्डवैरवधिरुल्लङ्घितो गुप्तवासस्य तैः ।
इति जगुः साधवः किन्तु नामन्यत कुरुपतिर्दिष्टवृत्तं भवेत् किं वृथा ॥४३

विषमवादप्रचारी स दुर्योधनः सुखदसत्यं वचो नैव मेने यदा ।
उभयपक्षोद्भवां सांगरीं घोषणां निशमयन्तोऽखिला म्लानतां भेजिरे ॥

न हि नरः कोऽपि साधूरणं वाञ्छति प्रवरवीरप्रणाशं नु कश्चेहते ।
हितकृतो ये पुमांसो द्वयोः पक्षयोर्भुवि बभूवुश्च ते हन्त चिन्तातुराः ॥४५॥

द्रुपदभूपो विराटस्तथाऽन्ये नृपा रणनिरोधप्रयत्नान् बहूंश्चक्रिरे ।
हतहितं भ्रातृयुद्धं निरोद्धुं प्रभुर्निजपुराद् द्वारकातो डुढौके हरिः ॥४६॥

भवति यद् भाव्यमस्यां जगत्यां विभोर्विलसितं यच्च निर्द्धारितं पूर्वतः ।
तदनुकूला मतिर्जायते प्राणिनां परमपुंसोऽस्ति चित्रं चरित्रं ध्रुवम् ।४७॥

यदि समीहेत योऽस्ति स्थितः प्राणिनां हृदयमध्ये स किं नैव कुर्याद् भुवि ।
नटयतस्तस्य सर्वं जगत्स्वेच्छया क इह हार्दं विबोद्धुं क्षमो मानुषः ॥४८॥

वचनमन्यत् तथा कार्यमन्यद् ध्रुवं हृदयमन्यत् तथाऽन्यच्च संचेष्टितम् ।
नटवरस्यास्य बोद्धुं समीहामहो न च समीष्टे सुधीः कोऽपि कालत्रये।।४६

क्षितिभृतो ये विराटालये संगता रणमपाकर्त्तुकामा विषीदन्मुखाः ।
भयमिताः सन्ति सर्वे यतः सगरेऽगणितवीरा गमिष्यन्ति नाशं ध्रुवम् ॥

परमहो केवलोऽयं स गोपीश्वरो निजजनानन्दनः परजनस्यार्दनः ।
निखिलसवीक्षितः सुप्रमोदान्वितः क इह जानाति तत्कारणं विज्जनः ॥

स च जनो धन्य आस्ते सुखी सर्वदा श्रुतिपयोजातहैयङ्गवीनस्य भुक् ।
यतिवरो योगिनामग्रगण्योऽप्यसौ निजरथप्रग्रहो येन कृष्णार्पितः । ५२॥

स्वजनमित्राणि दारास्तथा बान्धवास्तनुजनुश्चाथ माता पिता सोदराः ।
भुवनमेतत्समग्रं न रिक्तं भयैश्शरण एकः परस्यात्मनो निर्भयः ॥५३॥

स भगवान् धर्मराजेन संप्रेरितोऽन्वयविनाशप्रतप्तात्मनाऽहर्निशम् ।
निजकलङ्कं जिहीर्षावताऽऽजीवनं सततमन्तःकृतेर्म्लानतापादकम् ॥५४॥

उपरि भावेन सन्ध्यर्थमुत्को ययौ हृदि निजे चेहते क्ष्माभृतां ध्वंसनम् ।
भुवनभारायमाणामरद्वेषिणां बत विधेये तदीये वयं मौनिनः । ५५॥

स हि ययौ हस्तिपुर्यां नटानां पतिः कुरुकुलाग्र्यं च दुर्योधनं दुर्मतिम् ।
प्रणयतो भीतितो वापि संभर्त्सयन् बहुविधं कौरवांस्तांस्तथाऽबोधयत्॥५६

भगवतस्तूपदेशं विमत्य प्रभुं कुमतिरेनं जगन्नर्तकं श्रीहरिम् ।
सपदि बद्धुं स्वकीयाञ्जनानैरयद् ध्रुवमहङ्कारभाजां मतिर्भ्रश्यते ॥५७॥

कमलजन्माऽथ नारायणोऽसौ मृडस्त्विह हि चर्कर्ति बर्भर्ति जर्हर्ति च ।
जगति यस्येङ्गितात् सोऽद्वितीयः पुमान् यदुपतिः प्रेमदाम्नैव संबध्यते ५८

प्रकटितभ्रूविलासप्रभावेण तान् हतधियो दुर्हृदान् ध्वस्तवीर्यान् समान् ।
विदधदेष प्रभुः पाण्डुपत्न्या तथा निजजनैः प्रीतिपूर्वं मिलित्वा ततः ५९

प्रणतिसश्लेषहस्ताग्रसंयोगतः स्मितनिरीक्षाकरोत्थापनाद्यैः प्रभुः ।
मनुजवृन्दं यथायोग्यमानन्दयन् मतिमतामानुमत्यं गतो प्राप्तवान् ॥६०॥

करिपुरान्तं जनौघैर्मुदाऽनुद्रुतो विफलिताशः स सम्प्रेषितोऽभूत्तदा ।
तिमिरहन्तुः सुतं स्वेङ्गितेनाह्वयन् निजरथे तं च संस्थाप्य संप्रस्थितः॥६१

रविसुतस्यन्दनं रिक्तमन्वग्ययौ नयगुरुः केशव' कर्णमैनप्रभम् ।
बहुविधैः सामदामप्रभेदादिभिः शुभवचोभिः प्रभुः शिक्षयामास तम्॥६२

अखिलवित्सर्वहृत्स्थोऽपि विष्टश्रवा नृपतिकर्णं स नाबोधयिष्यद् यदा ।
अतपरत्वं कृपज्ञ त्वमन्ये गुणा भुवि समेष्यंस्तदीयाः कथं विस्तृतिम् ॥६३॥

सरसिजस्निग्धपाणौ निजे कोमले मृदुकरं कार्णिकं दक्षमास्थापयन् ।
नटपतिर्भक्तसत्कीर्तिविस्तारणे कृतमतिर्नीतिगर्भं वचो व्याहरत् ॥६४॥

सुहृदये कर्ण वेदादिशास्त्रं भवान् निखिलमध्यैष्ट तन्मर्मवेत्ता तथा ।
ऋषिमुनीनां च वर्षीयसां सेवयाऽलभत सत्सङ्गजातानलभ्यान् गुणान्॥६५

विनयशीलोऽसि दानीश्वरः कीर्तिमांस्तव यशःसन्ततिः सस्तृतौ सर्पति ।
अवितथं यद् रहस्य मया कीर्त्यते तदिदमाकर्णनीयं त्वया ध्यानतः ॥६६

त्वमसि हे तात सूतस्य पुत्रो न हि न हि च नीचान्वये ते जनुः कुत्रचित् ।
मम पितुः स्वसृकायाः त्वमाद्यः सुतो भवसि धर्मात्मजस्याग्रजो मद्गुरुः ॥

भगिनिका ज मदस्यैकदा सा पृथा मनुपरीक्षार्थमुत्कण्ठिता बालिशा ।
अजनयत् सूर्यसङ्गाद् भवन्तं सुतं वयसि कौमारके ज्ञातमेतन्न ते ॥६८॥

भवसि तद्धर्मतस्त्वं हि पाण्डोः सुतस्तव लघुः सोदरोऽजातशत्रुर्नृपः ।
नियमतो न्यायतश्चापि सिंहासनं कुरुकुलस्य त्वमेवाधिकर्तुं क्षमः ॥६९॥

भवितुमर्होऽसि सम्राट् पृथिव्या भवान् व्रजतु सार्द्धं मयैतर्हि सम्राट्पदे ।
त्वदभिषेकं करिष्यामि चान्यैर्नृपैः सह समैः पाण्डवैरन्धकैर्वृष्णिभिः ॥७०॥

उपरि ते बीजयेच्चामरं धर्मराण् महितगाण्डीवधन्वा भवेत्सारथिः ।
बलिवरो भीमसेनोऽभिमन्युस्तथा नकुलदेवादयः स्युस्त्वदाज्ञारताः ॥७१॥

मम तु वंशोद्भवा मातृपक्षास्तव जनकपक्षाः समे पाण्डुसम्बन्धिनः ।
भुवि समस्ता नरेन्द्रास्तथाऽन्ये जना वशमिताः सम्भविष्यन्त्यनायासतः ७२

क्षितिभृतो वृष्णिवंशोद्भवाश्चान्धका युवकवीरास्त्वदाज्ञावशवादिनः ।
वयमपि त्वन्निदेशप्रतीक्षारताः कथय किं स्यात्ततोऽन्यद् भवेत् तावकम् ॥७३

तव बलं चैकमलम्बिताः कौरवाः समरमिच्छन्ति नृत्यन्ति कूर्दन्ति च ।
अगणिता वीरपत्न्यो गमिष्यन्ति चेदहह वैधव्यमस्मादसन् किं भवेत्७४

उभयपक्षस्य चैको भवान् रक्षकः कुलविनाशं त्वमेवाद्य संरोत्स्यसे ।
हितमये सगरात् कस्य जातं वद मम वचः पथ्यमेतद्धि कर्णे कुरु ॥७५॥

युधि तु सम्पत्स्यते पाण्डवानां जयो विजयिन कोऽभियातुं समर्थोऽर्जुनम् ।
विदधतः सिंहनादं गदां बिभ्रतोऽभिमुखमायात्यये भीमसेनस्य कः ॥७६

विमृश शान्तेन चित्तेन मे सद्वचः कुरु मदीय मतं सत्वरं स्वीकृतम् ।
नृपतिसिंहासने तिष्ठ मोदस्व भो नय च साफल्यमत्रागमं मामकम् ॥७७॥

अवसरः शोभनो नैष संत्यज्यतां शुभमहो शीघ्रमेव स्वनुष्ठीयताम् ।
परदिनस्याद्य कृत्यं सुसम्पाद्यतां त्वदभिषेकेन युद्धाग्निरारुध्यताम् ॥७८॥

अमृतसंवादि वाचं समुच्चारयन् गुरुवरो वाग्मिनां प्रेम संदर्शयन् ।
सरसिजस्निग्धदृग्भ्यां मनो मोहयन् वदनमेतस्य तस्थाववालोकयन् ॥७९

भगवतो देवदेवस्य दैत्यच्छिदोऽमृतमयीं वाचमाकर्ण्य कर्णप्रियाम् ।
अभजदेतस्य गम्भीरतामानन दिनमणेरात्मजस्य प्रभाभास्वरम् ॥८०॥

क्षणमयं मौनमास्थाय तिग्मांशुजो नयनजाश्रूणि चैलाञ्चलैर्मार्जयन् ।
श्वसनवेगेन संरुद्धकण्ठस्वरो हृदयनाथं वचो व्याजहार त्विदम् ॥८१॥

असुभृतामन्तरात्मस्थितस्त्वं विभो तव परोक्षं न किञ्चिद् वरीवृत्यते ।
हृदयभावं मदीयं विजानास्यये किमभिधेय विमृश्यापि नालोचये ॥८२॥

हितकरं वाचमाहस्म सत्यं भवान् प्रणयमन्यः क एतादृशं दर्शयेत् ।
स्मरत एतादृशीं प्रीतिमेतर्हि ते तनुजरोमाण्युदञ्चन्ति मे सर्वतः ॥८३॥

अवदधेऽहं पृथायास्तु कानीनकस्तनुजनुर्मे पिता तेजसामीश्वरः ।
सुरसरित्तोयमध्ये वहन् भाग्यतोऽधिरथनाम्नाधिकारिणा यतो रक्षितः ॥८४॥

अहमपि चेत्रजो धर्मराजादिवन्नरपतेरात्मजश्चास्मि पाण्डोस्तथा ।
त्वमपि मन्मातुलस्यात्मजोऽसि प्रभो विदितमास्ते रहस्य समस्त मम । ८५

अनृतवाचं भवान् नैव भाषिष्यते त्वमसि सत्यस्वरूपो यतो निःस्पृहः ।
धरणिराज्यं प्रदास्यत्यवश्यं भवान् भवति संशीतिलेशोऽपि नैवात्र मे ॥८६

गुरुरहं बान्धवो धर्मराजेन चेद्वगतः स्यां तदा मह्यमेवार्पयेत् ।
स किल भूमण्डलस्यापि साम्राज्यकं मम मनस्येष विश्वास उत्पद्यते ।।८७

अधिपतावाप्तिजो नास्ति मे संशयो नृपतिसिंहासनस्याधिकारी ह्यहम् ।
भगवता मत्कृता धृष्टता क्षम्यतां निखिलमेतत् खपुष्पायित साम्प्रतम् ।।८८

कृपगुरू रङ्गभूमौ यदा पृष्टवान् मम कुलं जन्मदं गोत्रमित्यादिकम् ।
समभिधास्यन्नु सत्योत्तरं मातृका समभविष्यत् फलाढ्यं वचस्तावकम्८९

अहह मात्रा त्वहं निर्दयं वाहितो ह्यधिरथेनोद्धृतो राधया पालितः ।
अगणित क्लेशराशिं सहित्वा तया तनुजनेर्निर्विशेषं च संवर्धितः ॥९०॥

जनगणो वेत्ति राधेयनाम्नैव मां सदवलम्बोऽस्मि पित्रो रहं चैककः ।
कथय तौ प्राणरत्ताकृतौ तादृशौ कथमहं त्यक्तुमर्हः कृतघ्नो भवन् ॥९१॥

अधिरथो जातकर्मादि संस्कारकं निजकुलस्यानुकूलं व्यधान्मामकम् ।
स च मया दत्तपिण्डं सदैवेहते पितृकृतघ्नो भवेयं कथं त्वं वद ॥९२॥

प्रणयिनीः सूतकन्या अनेका अहं परिणयन् पुत्रपौत्रादिकाँल्लब्धवान् ।
वत परित्यज्य सर्वा अहं दुर्मतिर्नृपतिवंशं कथं संश्रयिष्याम्यये ।९३॥

अगणितान् सूतवंश्यैः समं भ्रातृभिरहमकार्षं क्रतूंस्ते विजानन्ति माम् ।
निजकुलाभ्यर्हितं तर्हि तान् साम्प्रतं विमुखतां प्रापयिष्याम्यहं मन्दधीः९४

कुरुपतिर्मामकीनैर्हि युत्कौशलै रचितवान् संगरं भीषणं पाण्डवैः ।
अहमहो शत्रुपक्षं यदि ह्याश्रये सुहृदसौ किं कृतघ्नं न मां मस्यते ॥९५॥

स्थितवता नापि साम्राज्यसिंहासनेऽमितसुखं चान्वहं साधु सम्भुज्यते ।
विरहता कौरवेशं मयाऽऽश्रीयते नृपतिपीठं तदा दुर्यशः प्राप्यते ॥६६॥

उपनते युद्धकाले यदा चेदहं दलमिदानीं भजे पाण्डवीयं तदा ।
नृपगणो भीतिमन्तं रणापद्रुत मनसि नैजेऽवधास्यत्यवश्यं नु माम् ॥६७॥

धनुरिद् गाण्डिवं बिभ्रदेषोऽर्जुनो भयमितः कर्णतो राज्यलोभेन तम् ।
निजदल चानयच्चेति वा मस्यते जनतया हन्त तेनायशः स्याद् द्वयोः६८

तव गिरा चेदह पाण्डुपुत्रो भवन् नरपतेः पीठमेतर्हि चेदाश्रये ।
नृपतिवृन्द ध्रुव मस्यते स्वे हृदि परमनीच महालोभिन मां तदा ॥६६॥

व्यतिगत नैव चिन्त्यं त्वयाऽन्तर्दृशाऽभिमतमेवास्ति ते मामुपालम्भसे ।
कथमहो पूर्वतो यद्धि निर्धारितं भगवता किं हि तद् व्याहत स्याद् भुवि ॥

मधुरिपो त्वं हि सर्वासुभृच्चालकः क इह जीवस्त्वदाज्ञापहन्ता भवेत् ।
परिजहत् सन्धिवार्तां विधत्तां तथा रणनिनादो यतः स्यात् समुज्जृम्भितः

दनुजसंभूतिजाः मानवा भूतले क्षितिपवंशं समाश्रित्य चोत्पेदिरे ।
रणहतांस्तान् विधायाशु नाकस्थितान् भवगतिः संविधत्तां भवान् सत्वरम्

न हि भयं मेऽर्जुनाद् भीमसेनात्तथा विजयमाप्स्यामि नूनं भवांश्चेद् यदा ।
परिहरेत्पाण्डवानां दलं वाऽऽश्रयेद् व्रतमुदासीनताया द्वयोः पक्षयोः ॥

इह रणे स्याद् ध्रुवं पाण्डवानां जयः प्रभुरमीषां यतस्त्व हि पक्षे स्थितः ।
भगवदादिष्टकृत्य च यत्पूर्वतः भवति कः प्राणधारी विहन्तुं क्षमः॥१०४

मरणतो भीतिरास्ते न मे काचनार्जुनशरान्मृत्युमाप्स्याम्यहं तेऽग्रतः ।
द्रुपदजो द्युम्नको धृष्टपूर्वः प्रभो युधि भविष्यत्यसौ द्रोणहन्ता ध्रुवम् १०५

वत शिखण्ड दधानं विधायाग्रतो निधनमानेष्यते भीष्ममेषोऽर्जुनः ।
कुरुपतिं धार्त्तराष्ट्रं सह भ्रातृभिर्गमयिता भीमसेनो यमस्यालयम् ॥१०६॥

मम मनः प्रेक्षते नर्तनं भीषणं प्रधनचण्डीकृतं दुष्टराजान्तकम् ।
तव कृपातोऽवशिष्टा भविष्यन्ति ते सुकृतपक्षस्थिताः पाण्डवाः केवलम् ॥
इदमये प्रार्थये त्वत्पदाब्जे नतो वदतु मद्वृत्तमेतन्न धर्मात्मजम् ।
स शृणुयाच्चेत्तदा मह्यमेवार्पयेद् भुवनराज्यं प्रतीतिर्मदीयेदृशी ॥१०८॥
अतिकृतज्ञत्वभारेण चास्म्यानतः कुरुपतेस्तेन लब्ध स्वसिंहासनम् ।
ध्रुवमहं त्वर्पयिष्यामि तस्मै ततो महदनर्थत्वमायादियं मेदिनी ॥१०९॥
नृपपदस्योपयुक्तो न दुर्योधनः परमनीचोऽस्ति धर्मप्रतीपस्थितः ।
भवतु सम्राड् धरित्र्याः स्वयं धर्मराण् मुदमवाप्नोतु तेन प्रजामण्डलम् ॥
प्रधनहेतुं प्रधानं किमेतं जनं निरदिशस्त्वं सतां सर्ववित् सम्मतः ।
जगदिदं चालयन् प्राणिनां सर्वदा हृदयदेशेऽवशेषेषु संराजसे ॥१११॥
वयमिमे यन्त्रसाम्य भजामः समे त्वमसि यन्त्री जगत्पुत्तलीनर्तकः ।
अभिमतस्यात्र संसाधनार्थं हि ते जगति नः केवलं विद्यते सम्भव. ॥
मम हृदाविध्यते सूचिकानां शतैर्द्रुपदपुत्री कुवाच्येन संपीडिता ।
नृपतिपाण्डोः सुताश्चापि दुर्योधनप्रणयलोभेन दुर्वाक्यबाणार्दिताः ॥
त्वमखिलप्राणिनामन्तरात्मालयेष्वसि भवन्तं समज्ञं किमावेदये ।
मयि दया संविधेया त्वया चेदृशी निजकृतात्पातकान्मे विमुक्तिर्भवेत् ॥
भगवदालिङ्गितो रोरुदावानयं निजरथे संस्थितः स्वालय प्रस्थितः ।
गरुडकेत्वाज्ञया सोऽपि सर्वेश्वरो नृप.वैराटस्य वव्राज सत्पत्तनम् ॥११५

वंशाध्वंशभयेन धर्मतनयः सम्प्रेरयन्माधव
ग्रामान् पञ्च वत्ताधिगन्तुमसकौ दुर्योधनस्यान्तिकम् ।
दूतः सन्धिकृते भवन् स भगवान् वैफल्यमासादय-
आयातश्चाखिदुस्तदाऽधिहृदयं श्रीधर्मराजादयः ११६॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये चतुर्दशः सर्गः समाप्तः

—:o:—

## अथ पञ्चदशः सर्गः

संग्रामं ध्रुवमवगत्य वीरमाता श्रीकुन्ती मिलितुमियेष पुत्रकर्णम् ।
अन्योऽन्य बहुश इहानयो र्निरीक्षा सम्पन्नाऽभवदुभयोर्न किन्तु वार्ता १

अद्राक्षीन्निजजननीं यदैव यत्र प्राणसीन्नतशिरसा तदैव कर्णः ।
स्नेहेन क्षरितपयोधराऽपि माता त दृष्ट्वा प्रवचनमाशिषां न्यगादीत् ॥२॥

दुर्भाग्याद्धृदयमिव द्वितीयमेनम् आलिङ्गन्नहि जननी जनापवादात् ।
मातुः सोऽपि च चरणौ समानतः सन् वैश्याद् गलितमना न वा चुचुम्ब॥ ३॥

सामीप्ये सुनिवसतः स्म मातृपुत्रौ मध्यस्थोऽभवदिव भूधरो हिमानाम् ।
पार्थक्यादपि तनुतोऽनयोर्नचासीद् विश्वस्मिन्नसुखदहार्दिकान्तरालः ॥४

पञ्चानां तनुजनुषां द्विसप्तकेभ्यो वर्षेभ्यः शुभमुखदर्शन विधातुम् ।
श्रीकुन्ती परमसमुत्सुका परन्तु श्रुत्वा तां गिरमिह सामरीं चिखेद ॥५

युद्भीमां परिण तेमाकलय्य मातुर्मुग्ध हृत परमविषण्णतां प्रपेदे ।
युद्धेऽस्मिन् भवति जय· पराजयो वा कस्येतन्न हि सुविवेद कोऽपि विद्वान्

श्रीकृष्णास्वधिगतयुद्धसन्निदेशं वीराणां प्रसवितृ चाप्यदः कठोरम् ।
संग्रामं रचयितुमुत्सुकं जनन्याः स्नेहार्द्रं हृदयमनिष्टमाशशङ्के । ७॥

शूराणामुभयदलान्तरस्थितानां सर्वेषां युधि च बलाबल स्मरन्त्याः ।
सर्वेऽपि प्रसृमरकीर्त्तयो वरेण्या योद्धारो नयनपथ समीयुरस्याः ॥८॥

स द्रोणः सकृपपितामहस्तथाऽन्ये नातन्वन् प्रवरभयं तदन्तरङ्गे ।
एक तं तरणितनूजमेव कर्णं सं मृत्याभवदियमार्त्तिभृद् विषण्णा ॥ ९ ॥

द्रोणो वा रणचतुरः पितामहो वा तन्वाते प्रणयमनारतं सुतेषु ।
सत्प्रीतिं नृपतिसुयोधनस्य वाञ्छन् सूनूनामसुहरणेऽलमस्ति कर्णः ॥१०॥

कार्यं तद्भयपरमतोऽस्ति किं नृशंसं यद् भ्राता प्रियनिजसोदरान् निहन्ता ।
नैवास्ते भुवि विषयेऽत्र कर्णदोषो जानामि स्वकृतमहाग एव हेतुम् ॥११॥

आत्मानं निजहृदि वेत्त्यसौ तपस्वी राधेयं ह्यधिरथसूतपुत्रमेव ।
तद्गत्वा सपदि तदीयपार्श्वमद्य तस्मै स्वं परिचयमर्पयामि सत्यम् ॥१२

सम्बोध्यावितथवचो विहाय लज्जां स्वीयां तन्निकटमुपस्थिता भवन्ती ।
सत्स्वान्तैर्विरहितबन्धुभिः स्वकीयैर्जातं तं ध्रुवमहमद्य मेलयिष्ये ॥१३॥

एतत् स्वे मनसि विचिन्त्य वीरमाता वैदुर्य्यान्निलयनतो विनिर्गता सा ।
सर्वेषां नयनपथं च वञ्चयित्वा स्वीयानां सचकितनेत्रमुच्चचाल ॥१४॥

सच्छुभ्रं परिदधती दुकूलमेकं श्वेतेनापरवसनेन गुप्तदेहा ।
सन्तप्ते दिनमणिदीधितेः प्रतस्थे सत्कूले सुरसरितः पदातिरेषा ॥१५॥

उत्साहो मनसि विवर्द्धयत्यमन्दमानन्दं सुतमिलनार्थलब्धजन्मा ।
वक्षोजच्चरितपयोऽपनोदयन् या हृत्कम्पो जनयति खेदमप्यनन्तम् ॥१६॥

मां कश्चित् किमिह नु पश्यतीति भीत्या तिष्ठन्ती वत परिवृत्य शङ्कमाना ।
आयान्ती विविधविचारसिन्धुमग्ना दृष्ट्वा स्वं तनुजनुषं प्रसादमापत् ॥१७॥

शालाभावुपरि मुमुत्थितौ विशालावुष्णांशोर्निजमसृणौ करौ प्रसन्ना ।
स्तुत्यर्थं विदधतमेनमात्मपुत्रम् संदृश्यातिशयमुदा ययौ च तस्थौ ॥१८॥

सौवर्णे सुरुचिरकङ्कणे दधानं कौशेयं मृदुतरपीतवस्त्रयुग्मम् ।
शोभाढ्यामतिविमलां च वज्रमालां प्रासीदत् किल जननी विलोकयन्ती

विस्तीर्णं कवचविभूषितं ह्युरोऽस्य हृच्चौरं कुलिशकठोरकन्धरं च ।
भूषे च च्चरितसुधे श्रवःस्थिते द्वे आलोक्य प्रमुदितमानसा बभूव ॥२०॥

तिग्मांशोः किरणनिपातनात्तदीयं संरेजे वरमुखमण्डलं प्रदीप्तम् ।
शाखाभ्यां सुमसृणहेमनिर्मिताभ्यां संयुक्तेऽपर इव भूरुहे दिनेशः ॥२१॥

सर्वस्मान्निजमनसो निरुध्य वृत्तिमेकाग्रां विदधदयं प्रयत्नवर्जम् ।
कञ्जाभं नययुगं च मुद्रयित्वा गायत्रीमनुमिह संजपन् रराज ॥२२॥

अङ्घ्रिभ्यामतिशयकोमलामलाभ्यामायाता ह्यभवदियं विषण्णभावा ।
प्रस्वेदैः स्वतनुसमुद्गतैः प्रकामं स्विन्नाऽऽसीज् जरयातिजीर्णदेहा ॥२३॥

छायायां तनुजनुषोऽतिनिःश्वसन्ती स्वश्रान्तेरपनयने कृतप्रयत्ना ।
कारुण्याद् गलितहृदा प्रतीक्षमाणा संतस्थे मनुजपनान्तकालमस्य ॥२४॥

ईशोऽह्नां निजकिरणैः प्रताप्य शीर्षमारेभेऽसुखयितुमस्य पृष्ठदेशम् ।
ज्ञात्वैतत्तदनु निवर्तिताननस्य पूज्याया उपरि सुसंपपात दृष्टिः ॥२५॥

साश्चर्यं सवितृसुतो निरीक्ष्य कुन्तीं तामम्बां प्रति नतकन्धरोऽञ्जलिं स्वम् ।
आबद्ध्य प्रणयगिरार्द्रचित्तवृत्तिर्व्याजह्रे वचनमिदं स हेतुगर्भम् ॥२६॥

राधेयोऽधिरथजनिश्च सूतवंशे संभूतः प्रणतिततिं ब्रवीमि नीचः ।
त्वं माता कुरुकुलजातभूमिपानामागत्याः किमिह निदानमस्ति तेऽद्य २७

श्रुत्वा तत्प्रणतिवचो विलज्जमाना कुन्ती स्वं नयनयुगं चकार भूमौ ।
विक्रान्तं नरवरकर्णमेनमेषा सद्वाचं गदितुमथ प्रवर्त्तते स्म ॥२८॥

हे प्रेयः पुनरपि नैव वाच्यमित्थमुत्पत्तिर्न हि तव नीचसूतवंशे ।
अद्याहं विदितचरीं जनुःप्रवृत्तिं सत्यां ते पुरत इहागतास्मि कर्त्तुम् ॥२९॥

कन्याऽऽसं पितृनिलये निजे वसन्ती दुर्वासा मुनिवर आगतः कदाचित् ।
तं नित्यं निरलसमङ्ग सेवमाना सन्मन्त्रं मुनिकृपयैकमध्यगच्छम् ॥३०॥

तन्मन्त्रातिशयशुभप्रसादजन्यं जन्माभूद् दिनमणिदेवसंगमात्ते ।
मत्कुक्षेस्त्वमयि विनिर्गतोऽसि पुत्र सन्देहोऽणुरपि न चात्र संविधेयः ३१

अज्ञानादधमसुयोधनस्य शिक्षां दुर्बुद्धेः परिणतिदुःखदां विमत्य ।
भ्रातृभ्यो विनतसहोदरेभ्य एभ्यो विद्वेषं त्यजतु भवांस्तु पाण्डवेभ्यः ३२

१५

त्वां सर्वेऽवद्धतु चाद्य पाण्डुपुत्रं कौन्तेयं न हि वत सूतवंशजातम् ।
ज्यायांस्त्वं सकलसुतेषु मामकेषु साम्राज्यास्पदमधिगत्य भुङ्क्ष्व भोगान्॥

राधा ते न हि जननी कदापि, कुन्ती माताऽस्मिञ्जगति जनिप्रदातृकाऽस्मि
पुत्राणां परमहिताऽस्ति चैकसेवा वार्द्धक्ये समुपनते मता स्वपित्रोः ॥३४

एह्येहि द्रुतमयि जात बान्धवैः स्वैः संमिल्याऽमितसुखभोगिनीं कुरुष्व ।
मां स्नेहात् पुलकितसर्वगात्रयष्टिं वृद्धाया मम वचनं वृथा न कुर्याः ॥३५

भोज्यान्नं विविधरसाढ्यचोष्यलेह्यं सुस्निग्धं सुत परिविष्य भोजयन्ती ।
षड्-भ्रातॄनहमुपवेश्य चैकपङ्क्तावानन्दं तव दययैव संभजेयम् ॥३६॥

कुन्त्युक्तं निखिलवचोऽस्ति सत्यमेतत् सम्मान्यं तव हितदं च सर्वथैव ।
सौख्याप्तिः प्रभवति मेऽस्य पालनेन वागेषा दिनमणिमण्डलादुदश्रुत् ३७

मात्रुक्तां दिनकरमण्डलाच्च वाचमायान्तीं श्रुतियुगलेऽमृतं क्षरन्तीम् ।
आकर्ण्याभवदयमुत्थवाष्पराशिः स्वे नेत्रे सपदि विमृज्य तां न्यगादीत् ॥

देवि त्वं वदसि तदेतदस्ति सत्यम् एष स्यां तव तनुजो न मेऽप्रतीतिः ।
नावेदीस्त्वमिदमम्ब भीमसेनः सौतिं मां सदसि यदाह्वदाजहार ॥३९॥

त्वं चासीः परिषदि तत्र विद्यमाना तिग्मांशुर्नभसि च वर्तमान आसीत् ।
एतस्मिन् स्ववसर आगते युवाभ्यां ज्ञात्वत्तं कथमिव मौनमालम्बे ४०

न त्वं वा न हि च दिनेशमण्डलं वा चचाथे यदहमये न चास्मि सौतिः ।
उद्योगादपि शतशश्च सत्फलाढ्य आस्ते किं समयमतीत्य बीजवापः ४१

दृष्टौ ते जननि मृतिं गतोऽहमस्मि नोदासीदहह दयेषदप्यबोधे ।
बालेऽस्मिंस्तव मलमूत्रनिर्विशेषो निःस्नेहात् पयसि विसर्जितो वराकः ॥

आत्थ त्वं न हि जननीं ब्रवीतु चैनां पोषं या स्तनपयसा च मामनैषीत् ।
किं कृत्यं तनयहितं त्वया व्यधायि येन स्यां तव वचनं हि मन्यमानः ४३

स्वं कार्य्यं ह्यफलितमाकलय्य चित्ते हन्त त्वं वदसि तनूजधर्ममद्य ।
कर्त्तव्यं निखिलमिहास्ति पुत्रकाणां मातॄणां न भवति किन्तु नैजधर्मः ॥

क्षिप्त्वा मां पयसि तु देवि राजमानात् सत्कीर्त्तेरपि नृपसंस्कृतेर्निपात्य
स्वार्थानामिह हि सुसाधनार्थमुक्त्वा सन्मैत्रीमुपदिशसि समेत्य नैजपुत्रम् ४५

नोद्वाहोऽभवदयि राजकन्यकाभिर्नाध्यस्तं बत नरराजसिंहपीठम् ।
छत्रं वा सितमथ चामरे च शुभ्रे त्वद्धेतोरधिगतवानहं न मातः ॥४६॥

पश्चाहं समरकृतेऽवशिष्यतेऽद्य सम्प्राप्ता कथयसि मेलनस्य वार्त्ताम् ।
निःस्नेहा त्वमयि विधाय पुत्रघातं कर्त्तुं मामुपदिशसीह मित्रघातम्॥४७

यत् सौख्यं बहुविधमस्ति राजयोग्यं सम्मानं नरपतियोग्यमप्यनन्तम् ।
भोगानां शतमुपभुज्य युद्धकाले भ्रातॄणां शरणमुपैमि किं कृतघ्नः ॥४८॥

स्यादेवं मदुपरि मानिनो मनुष्या राजानः समरमुपागताश्च सर्वे ।
सावज्ञं बत रजसां निपातनं भो न्यक्कारान् विदधत उग्रमाचरेयुः ॥४९॥

संसारेऽर्जुनवरवीरता प्रसिद्धा गाण्डीवं धनुरसकौ दधात्यमोघम् ।
स्पर्द्धां मां प्रति कुरुते रणे सदैव श्रीकृष्णः प्रभवति तत्सहायकश्च ॥५०॥

संग्रामं यदि समयेऽत्र संत्यजेयं तज्जिष्णोः परमपराक्रमस्य सूनोः ।
वीरा मां भयवशवर्त्तिनं विदित्वा मंस्यन्ते समुपगतं विपक्षपक्षम् ॥५१॥

तस्मात् स्याद् यदि च सहोदरो ममायं गाण्डीवी त्वमपि च जन्मदा मदीया
संग्रामे ध्रुवमहमर्जुनादिवीरान् स्वभ्रातॄन् युधि समुपस्थितान् हनिष्ये॥५२

मात्राज्ञाप्रतिहतिदोषभाग् भवेयं बन्धूनामपि वधजमहैनसां च भागी ।
मातस्ते चरणमहं शपामि, किन्तु नाहं भो विपदि जहामि धार्त्तराष्ट्रम्५३

इत्थं संगदितवतोऽस्य वक्त्रकञ्जं रक्ताभं भ्रुकुटिविलासदीप्तमन्यु ।
दुर्दर्शं तरणिकराश्चितं विलोक्य माताऽवाक् सपदि भयानता बभूव ॥५४॥

पश्यन्ती धरणिमिमां तथा च दृग्भ्यां मुञ्चन्ती ह्यसकृदियं कदोष्णमश्रु ।
आहैनं पुनरपि सा क्षणं विचिन्त्य माकार्षीः प्रिय सुत मामये निराशाम्

स्वौ कर्णौ सुपिहितवांस्तदैव कर्ण आकर्ण्यालपितमिदं स चाह भूयः ।
मावादीरिति वचनं हि मत्समक्षं नाकार्षं कमपि समर्थितो निराशम्॥५६

संग्रामे समुपगत धनञ्जयं हि संहन्यां किमुत स एव मां निहन्यात् ।
नान्येषां तनुजनुषां तवास्तिभीतिस्तान् प्राप्यापि च न निहन्मि वच्मि सत्यम्

मातस्ते जगति तथापि पञ्च पुत्राः स्थास्यन्तीति न वचनं मृषा मदीयम् ।
देवि त्वच्चरणसरोरुहं प्रपद्य संयाचे प्रणयवती मयि प्रसीद ॥५८॥

श्रुत्वा कर्णमुखाद् विनिर्गतमिदं सत्यं वचः सा पृथा
स्वाशिःसंवलितैर्वचोभिरसकृत्तं ह्यभ्यनन्दन्मुदा ॥
प्रोद्यच्चण्डसहस्रदीधितिकरैःसन्तप्ततीरात्ततो
गङ्गायाः पुनरागता स्वनिलयं केनाप्यदृष्टा सती ॥ ५९ ॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये पञ्चदशः सर्गः समाप्तः

—:०:—

## अथ षोडशः सर्गः

श्रीनारदश्च विदुरोऽप्यथ भार्गवश्च द्रोणः कृपश्च धृतराष्ट्रनृपश्च भीष्मः ।
युद्धं निरोद्धुमसकृन्मुनयस्तथाऽन्ये दुर्योधनं बहुविधं समशिक्षयन्त ॥१॥

निर्धारितं भगवता परमेण पुंसा यत्तद् विहन्तुमिह को मनुजः क्षमेत ।
प्रायोऽनुधावति सतामपि चित्तवृत्तिर्हित्वा प्रयत्नमखिलं भवितव्यतां हि ॥२

केशाश्वनापि नृपतिः परिबोधवाक्यं नासावमन्यत मदापहृतान्तरात्मा ।
कर्णस्य विक्रममनारतमस्य चेतः संस्मृत्य नैजविजयं परिमन्यतेस्म ॥३॥

तं निश्चितं समयमागतमाकलय्य वीरा दलद्वयत एव हि संगरस्य ।
क्षेत्रे कुरोरुपगता अवलम्बमानाः स्वं स्यन्दनाश्वगजसङ्घमथास्त्रशस्त्रम् ४

अक्षौहिणी कुरुपतेरिह रुद्रसंख्या सप्तैव राजति चमूस्तदजातशत्रोः ।
सेनाद्वयी वितनुते स्म समग्रपुंसां संविभ्रमं जलनिधेः श्रितवाडवाग्नेः ॥५

पुत्रो वृतोऽस्ति नृपतेर्द्रुपदस्य धृष्टद्युम्नाह्वयः सकलशूरवराग्रगामी ।
द्रोणाहतिस्त्विह तदीयकरेण नूनं संपत्स्यते विधिविदः प्रवदन्ति यस्मात्

किन्त्वेष यः सकलशत्रुदलापहन्ता भीमो बभूव बलतोऽपि च नामतश्च ।
यौधिष्ठिरप्रधनपक्षसमाश्रितायाश्चम्वाः प्रधानपतिकः स नियोजितोऽभूत् ७

दुर्योधनेन कुरुवृद्धपितामहोऽसौ भीष्मो व्यधायि निजसैनिकवर्गमुख्यः ।
नाम्नैव यस्य समरस्थितमानवानां वज्रायितानि हृदयान्यपि कम्पमापुः८

भीष्मोऽभवत् प्रमुदितः परमं परन्तु सुस्पष्टमाह वचनं नृपधार्त्तराष्ट्रम् ।
पृष्टस्तु पाण्डवदलेन हिताहितं स्वं वक्ष्ये यतो हि निखिला अपि मत्प्रियाःस्थ

सेनापतेस्तु न हि योग्यमिदं यदेष संश्रावयेद् युधि सपत्नहिताहितानि ।
छिद्रं स्वकं न कथयेत् कथमप्यरिभ्यस्तेषामनिष्टमपि नैव निवेदयेच्च१०

भाग्यं बलीय इति हन्त सुयोधनेन भैष्म वचोऽहितकरं तदपि प्रपेदे ।
प्रायो नृणां निकटवर्त्तिविनाशकाले मुह्यन्ति यान्ति मलिनत्वमहो मनांसि

ये प्रायशो नरवराः पतयो ध्वजिन्या दुर्योधनस्य नृपतेर्हृदयानि तेषाम् ।
कल्याणसाधनपराणि हि पाण्डवानां देहास्तु कौरवहिते निरता अभूवन्

देहस्य चेन्द्रियगणस्य च नर्तकं हि सर्वस्य जन्तुनिवहस्य मनः प्रदिष्टम् ।
तच्चेद् विपक्षवशवर्त्ति भवेत्तदानीं राज्ञो हितं शशकशृङ्गविषाणतुल्यम्१३

सेनाधिपः सकलवीरवरेषु धुर्य्यो भीष्मोऽब्रवीदयि सुयोधन कर्ण एषः ।
चेत्स्थास्यतीह कुटिलो मम सैनिकेषु नाहं कदापि शृणु भो प्रधनं विधास्ये

नायं शृणोति किमपि स्वबलावलेपान्मत्कं सदैव वचनं सुविमन्यते च ।
हेतोरतः प्रथममेष करोतु युद्धं किं वाऽविनीतहृदयः किल मत्परस्तात् १५

रोषावरोधनपुरस्सरमेष कर्णः शुष्कं विहस्य निजकञ्जकरौ निबध्य ।
ऊचे, पितामह भवानयि पूर्वमेव संयुध्यतां तदनु युद्धमहं करिष्ये ॥१६॥

उत्साहनाय रथिनां च महारथानां स्वं पक्षमास्थितवतां नरपुङ्गवानाम् ।
जिज्ञासितः कुरुकुलस्य नृपेण भीष्म एकैकशोऽस्य निकटे गणयाञ्चकार ॥

कार्णांश्च संगरगतानपि पुत्रपौत्रान् मध्ये ह्यजीगणदसौ स्वमहारथानाम् ।
किन्तु क्रुधा ज्वलितमानससौम्यवृत्तिः कर्णं निरीक्ष्य तु वदार्द्धरथं तमाह

सेनापतिर्निजशताधिकवाक्यवाणैर्मर्मन्तुदैः प्रहृतवान् वसुषेणमेनम् ।
ताम्राक्षतामुपगतोऽपि च मन्युवेगात् सेहेऽखिलं स्वसुहृदो हितभङ्गभीत्या

आशृण्वतामखिलवीरमहारथानां शूराग्रगण्यपुरुषस्य तथाऽपमानः ।
नैवोचितः परमसौ न तमाह किञ्चिद् वृद्धप्रवृत्तिरिह नैव विचारणीया २०

दुर्योधनः कुरुपतिर्गृहयुद्धभीतो बद्धाञ्जलिर्विनयगर्भवचः प्रयुञ्जन् ।
भीष्मं च कर्णमपि सत्वरमानिनाय शान्तिं रणाजिरगतो निजमङ्गलेच्छुः ॥

आयोधनेऽत्र परितोऽप्युपजृम्भमाणे स्वीयां प्रतिश्रुतिमसावनुसृत्य कर्णः ।
ताटस्थ्यमाप शिविरे न्यवसत् स्वकीये मन्त्रौषधिप्रहतवीर्य इवाहिराजः ॥

वीराग्रणीरनुपमो रणरङ्गधीरो ताटस्थ्यभृत् परपुमानिव दर्शनार्थी ।
युद्धस्थलं समुपगत्य यदा कदाचिच्छत्रून् निरीक्ष्य परिगर्जत आप खेदम्

तालस्वरानुसृतसल्लययुक्तवाद्यग्रामेषु मूर्च्छनशतं परितो ध्वनत्सु ।
नाप्नोति चेदवसरं निजगेयगीतेश्चेत्खिद्यतेऽधिहृदयं हि यथा कलाकृत् ।२४

सद्व्यञ्जनाञ्चितसुभोज्यपदार्थसत्त्वेनाप्नोति चेद् यदि बुभुक्षितमानवोऽन्नम्
किं वा पिपासितनरःसरितः सुराणानेष्टे ग्रहीतुमधिगत्य च बिन्दुमेकम् ॥

संग्रामवाद्यनिवहेषु नदत्सु तद्वच्छूराग्रगो नहि य आहवमातनोति ।
मर्मव्यथं स्वहृदि दुःखमनन्तमाप्तः सन्तिष्ठते हरिरिवायसशृङ्खलस्थः ॥२६

भावान् विपक्षविजयाय रणोद्गतान् स्वान् संरुध्य युद्धविमुखः प्रबभूव कर्णः
स्वीयं प्रसह्यमपमानमयं सहित्वा दुर्योधनस्य सुहृदः प्रियकृद् बभूव २७

स्वानुष्ठितां समनुसृत्य किल प्रतिज्ञां भीष्मो महामहिमविक्रमशालिधुर्य्यः
संयाति यत्र दिशि संगरमाचरिष्णुस्तामेव शात्रवबलै रहितां चकार ।२८॥

स्वं मूलकैश्च मृदुगृञ्जनकैश्च तुल्यं चेच्छिद्यमानमिह भीष्मपितामहेन ।
लक्षं बलं प्रतिदिनं प्रविलोक्य राजा कुन्तीसुतस्तु समवाप विषादमन्तः

श्रीदेवकीतनयसम्मतिमाप्य धर्मसूनुः पितामहमुवाच नतेन मूर्ध्ना ।
हे माननीयवर कौरववंशवृद्ध त्रैलोक्यवीरमहितोऽसि भवान् न चान्यः३०

त्रिःसप्तवारमनृपं भुवनं व्यधाद् यो रामः स्वयं परशुभृत् स्वगुरुस्त्वयैव ।
संस्तुत्यसामरिकमात्मबलं प्रदर्श्य सन्तोषितो जगति संगरमीहमानः३१

स्वब्रह्मचर्यमहसा समुपार्जितेन यस्यागमत् खलु यमोऽपि वशम्वदत्वम् ।
तंचोग्ररूपमिह संयति धारयन्तमीशोऽभिगन्तुमपरस्तु जगत्त्रये कः ॥३२

स त्वं प्रसीद भगवन् स्वयमेव नैजमृत्योरुपायमुपदिश्य कृतार्थयस्व ।
आपद्गतः प्रणतपाल जनोऽयमन्यं धर्मस्य रक्षणकृते कमुपाश्रयेत ॥३३

भीष्मोऽवदद् य इह चास पुरा बत स्त्री पुत्रत्वमाप नृपतेर्द्रुपदस्य यश्च ।
कृत्वाऽग्रतस्तमिममद्य शिखण्डिनं हि संयुध्यतां सह मयाऽमरनाथसूनुः॥

एवं कृतेऽहमपहाय निजास्त्रशस्त्रं स्थास्याम्यखेदमनुसृत्य निजां प्रतिज्ञाम्
मत्कप्रतिश्रुतिवचः परिरक्षयन्तं कृष्णं ममाभिमुखमानयताऽर्जुनेन ॥३५॥

घानिष्यतेऽधमशरीरभृदेष वैरी नान्योऽस्ति कश्चन मदीयवधस्य पन्थाः ।
इत्यादिशामि निजपूर्ववचोऽनुसृत्य कल्याणमीप्सुरचिरं भज मन्निदेशम् ॥

भैष्मीं गिरं सपदि तां प्रतिपद्यमानः कुन्तीसुतो द्रुपदपुत्रशिखण्डिनं हि
कृत्वा पुरोऽमरपतेस्तनुजः स भीष्मं हा हन्त हन्त विगतास्त्रमशाययत् तम्

ऊर्जस्विगाण्डिवधनुर्निसृतैर्निशातैर्नाराचकैः कुलिशवत्कठिनैरसंख्यैः ।
रेजे वपुः कुरुकुलेन्द्रमहारथस्य भुव्यंशुकोटिभिरिवाचितमैनबिम्बम् ॥३८॥

श्रीशन्तनोर्निजपितुर्वरदानतोऽयमिच्छामृतिं ह्यधिगतः शितबाणशय्याम्
प्राप्तोऽपि वीरपुरुषो न ममार भीष्मो दिग्वासरानुपरराम निहत्य शत्रून्

पन्थानमाश्रितवता युद्धर्मपूर्णं कुन्तीसुतेन बत कायरतां गतेन ।
भीष्मं रणाङ्गणशयानमवेत्य कर्णो मर्मान्तदुःखमसकौ मनसि प्रपेदे ॥४०

स्वीयं ततः शिबिरमेष विहाय तूर्णं मुञ्चन् व्यथातिशयतोऽविरताश्रुधाराम्
धावंश्चचाल परिवन्द्यपितामहस्य सन्दर्शनाय रणरङ्गमहीं गतस्य ॥४१॥

यो मानवेन्द्रदनुजेन्द्रसुरेन्द्रसङ्घैर्नायोधनेषु मिलितैरपि निर्जितोऽभूत् ।
स्वार्थान्धबुद्धिभिरिमं हि पृथातनूजैर्धर्मं समुभञ्य विनिपातितमाजुलोके ४२

संवेष्टितं परिखया परितो महत्या संसेवितं बहुबलैरिह पङ्क्तिबद्धैः ।
शस्त्रास्त्रभृद्भिरनुविद्धमसंख्यबाणैर्ध्याने रतं भगवतः परमस्य पुंसः ॥४३॥

कण्ठेन गद्गदरवेण दुरन्तदुःखादाह स्म भो कुरुकुलेश्वर तेऽप्रियोऽहम् ।
राधेयसूततनयो वसुषेणनामा त्वत्पादयोः स्वसकिरीटशिरोऽर्पयामि ।'४४

सूर्यो यथा प्रसृतदीधितिरप्रमेयः पूर्णो यथा त्वथ च शारदशर्वरीशः ।
पृथ्वीं गतो लसति तद्वदयं महात्मा ध्यानस्थितः स्वनयने उदमीलयच्च ॥

उन्मील्य नेत्रयुगलं कुरुवंशवृद्धभीष्मेण संभृतसमाधिकयोगिनेव ।
कर्णो विनीतहृदयोमहताऽऽदरेण दृग्भ्यामपीयत चिराय पिपासिताभ्याम्

प्रेमाश्रुवृन्दमभितः परिवाहयन् स्वं स्वीयेङ्गितैः प्रहरिवर्गमपास्य दूरम् ।
एकान्तमाप्य तु तदा स महानुभाव आत्यन्तिकप्रणयपूर्वकमाह कर्णम् ॥

आलिङ्ग पुत्र वसुषेण दृढं ममाङ्गमाप्यायितं कुरुमहाव्यथयाऽभ्युपेतम् ।
त्वामद्य साधु सुपरिष्वजतो ममान्तर्दाहश्चिराय विलयं सपदि प्रयातु ४८

पूर्णाद्य चास्तु चिरसञ्चितवासना मे त्वत्सुन्दराङ्गपरिरम्भणमीहमाना ।
इत्यादिशन् करुणया परया समेतोऽभ्यर्णं स कर्णमिममात्मन आजुहाव४९

तूर्णं ययावनुपितामहदत्तकत्तं कर्णस्तदा तमसकृत्स्वकरेण भीष्मः ।
वामेन वक्षसि निजे परिरभ्य गाढं नेत्राश्रुवारिभिरसौ धरणीमसिञ्चत् ५०

यद्वत् प्लवङ्गमशिशुर्निजमातृवक्षःश्लेषं समश्नुति तथैव दिनेशसूनुः ।
पर्यष्वजद्धृदयमस्य पितामहस्य स्वोष्णाश्रुविन्दुभिरसिञ्चदसावनल्पैः ॥५१

प्रोञ्छन् निजाश्रुनिवहं गलितं कथञ्चिदुत्थाय वारिजनिभेन परामृशत् सः ।
हस्तेन तत्सितशिरोरुहमञ्जुशीर्षं नाराचसङ्गपरिभेदजशोणितार्द्रम् ॥५२

ऊचे पितामह इमं स सकण्ठकम्पमेतर्हि यत् त्वमयि मन्निकटं प्रयातः ।
तेनास्म्यहं हि नितरां त्वयि तुष्टिमाप्तः पुत्र त्वया प्रियविधेयमनुष्ठितं मे ५३

एकं रहस्यमिदमङ्ग शृणु प्रबुद्धो राधाजनिर्न हि भवान् न च सूतपुत्रः ।
कुन्तीसुतोऽसि दिनकृज्जनकस्तवास्तीत्युक्त्वा पुरातनकथां कथयाञ्चकार५४

त्वं पाण्डुभूपतनयोऽसि ममासि पौत्रस्त्वं धर्मसूनुनृपतेः प्रवरोऽसि बन्धुः ।
सत्यं ब्रवीमि भवतोऽद्य समक्षमेतन्नास्ते मदीयवचनेऽनृतगन्धलेशः ॥५५॥

मत्तोऽधिकं च महता स्वपराक्रमेण त्वां वेद्म्यहं निखिलविश्ववरेण्यवीरम्
विद्वेष्टि नैव हृदयं हि कदापि मत्कं सम्मानमाचरति तेऽत्यधिकं प्रसीदत्

धर्मात्मशूरवरसत्यपराक्रमस्त्वं दानीश्वरो भुवनवन्द्यधनुर्धरश्च ।
तं मागधेश्वरमजेयमपि प्रयुध्य वीराग्रगण्यमपि निर्जितवांस्त्वमेव ॥५७॥

एकस्त्वमेव किल दिग्विजयं विधाय सञ्चित्य मेरुसदृशं च सुवर्णराशिम् ।
दुर्योधनस्य चिरवाञ्छितवैष्णवाख्यं यज्ञं फलाढ्यमकरोः स्वपराक्रमेण ५८

ज्ञात्वा मया तव वतातुलबाहुवीर्यं यन्निन्दितोऽसि बहु तन्न मदीयमागः ।
चित्ते कुरुष्व, हितबुद्धितया जगत्या युद्धं निरोद्धुमनसा विहितं मया तत्

आप्स्यन्न ते सहमतिं यदि कौरवेशः प्रारप्स्यतैष न रणं कुलधूम्रकेतुम् ।
तस्मात्तदीयसहयोगनिवारणार्थं पथ्यं वचोऽगदसमं कटुकं प्रयुक्तम् ॥६०

त्वं वैरिमर्द्दनविधावसि कृष्णतुल्यो धर्मात्मनां धुरि सदैव हि कीर्त्तनीयः ।
निष्कल्मषप्रथितशारदपूर्णचन्द्रज्योत्स्नेव भाति भुवने तव शुभ्रकीर्त्तिः ६१

नो वाञ्छितं मम परस्परमस्ति युद्धं हन्त प्रसह्य तदिदं सहसाऽभ्युपेतम् ।
तत्राप्यहं प्रथमसंगरकर्णधारो दिष्टस्य दुर्विलसितं क इहावरुन्ध्यात् ॥६२

आयोधनक्रतुरयं सुसमाप्तिमेतु पूर्णाहुतिं मम हि केवलमाददानः ।
वृद्धोऽहमस्मि यमराजनिकेतनस्य श्वो वाऽद्य वाऽतिथिरवश्यमहं भविष्णुः

सर्वे स्थ यूयमिह राजसुखोपभोगयोग्या ममास्य जरठस्य जहीत चिन्ताम् ।
आश्लिष्य वात्सनिपीडनमद्य नूनं षड् भ्रातरो मिलत पाण्डुसुताः प्रसन्नाः

स्फूर्जद्‌बलप्रबलशंबलमादधानाः सर्वे विपक्षनृपमर्दनतत्पराः स्युः ।
त्वं चार्जुनश्च मिलितौ भुवि किं त्रिलोक्यां शत्रूनलं हि निखिलानपि संविजेतुम्

मोदान्विताः प्रणयपूर्वकमद्य सर्वे वैरं निरस्य मम सन्निधिमभ्युपेताः ।
धर्मप्रभञ्जनवृषामरवैद्यपुत्रास्त्वं च प्रसह्य मिलिताः सुखमर्पयध्वम् । ६६॥

युष्मान् निरीक्ष्य निखिलानिह चोपविष्टान् सौहार्द्रभावनिरतान् प्रमुदंप्रपन्नान्
सन्तुष्टमानसिकवृत्तिरहं सुखेन त्यक्ष्यामि नश्वरमिदं समये शरीरम् ।।६७

त्वञ्चावलम्बनमये कुरुपाण्डवानां ज्यायांस्त्वमेव सकलादरभाजनञ्च ।
सिंहासनं समधिगच्छ यशोलभस्व व्यर्थं कुरुष्व वचनं न कदापि मत्कम्

तां स्नेहभावसहितां महितां हितां च व्याख्याय वाचमखिलैरभिनन्दनीयाम्
शुष्यद्गलः खलु बभूव पितामहोऽसौ वाच्यंयमत्वमपि हन्त ततः प्रपेदे ६९

पैतामहौ स चरणावसकृन्निपीड्य वन्द्यौ विनीतहृदयस्तमुवाच कर्णः ।
त्वं यद्धि कौरवकुलेन्द्र वचो ब्रवीषि तस्मिन् हितानि निहितानि हि मामकानि

कश्चित्पुमान् स्वपुरुषार्थबलेन दैवं नासम्भवं भुवि विधातुमिहेश्वरः स्यात्
एतत्समस्तनिगमागमतत्त्ववेत्ता विद्वत्समागमरतोऽत्रभवान् सुवेद ॥७१॥

इन्द्रात्मजेन सह योद्धुमहं प्रतिज्ञां कृत्वा ततोऽद्य विरतिं कथमाश्रयिष्ये ।
प्राणप्रदानपणतोऽपि सुरक्षणीया स्वीया प्रतिश्रुतिरिति क्षितिपालधर्मः ॥

जानेऽर्जुनं नहि विजेतुमहं समर्थः कृष्णो यतोऽस्ति भगवान् युधि तस्य गोप्ता
ज्ञात्वापि कारणमिदं मम चित्तवृत्तिरुत्साहभङ्गमधिगच्छति नाणुमात्रम् ७३

भीतिर्न मेऽणुरपि पाण्डवपक्षगेभ्यो नैवार्जुनादपि तथा यदुनन्दनाद् वा ।
किन्त्वस्त्रशस्त्रमहमद्य तदा ग्रहिष्ये आज्ञापयिष्यति भवान् यदि मां प्रसन्नः

श्रीमत्पदाब्जयुगलं प्रणिपत्य भूयो भूयो निवेदयति दासजनस्तवायम् ।
आदिश्यतामिति रणाय वचः प्रयुञ्जंस्तत्पादयोः पुनरसौ स्वशिरोन्यधत्त

आकर्ण्य कर्णवचनं परिमुञ्चताऽश्रूण्याकृष्य सूर्यतनयं परिरभ्य दोर्भ्याम् ।
ऊचे वचोऽहमपि तात नवेद्मि नैतद् रोद्धुं न कोऽपि पुरुषः प्रधन समर्थः

युद्धेऽत्र जागतिकवीरवराः असंख्या नूनं रणाग्निषु नृपाः शलभायितास्ते
यास्यन्त्यमून् सुविरहय्य सुरेन्द्रलोकं सर्वासुचालकसमीहितमेतदेव ।

त्वं याहि वीर समरे विजयस्व शत्रून् एधस्व शस्त्रपरमास्त्रसमन्वितः सन् ।
क्षात्रं समाश्रय हि धर्ममनुत्तमं स्वमाज्ञापयामि मुदितो न भजस्व चिन्ताम्

सर्वस्वमस्ति भगवान् वसुदेवसूनुः कृष्णो यथाऽत्र हितकृद् युधि पाण्डवानाम्
तद्वत् त्वमप्यसि सुयोधनपक्षगानामेकावलम्बनममङ्गलहृत् समेषाम् ॥७६॥

सोत्साहमर्जुनमुपेत्य विधेहि युद्धं त्वन्मङ्गलं युधि भविष्यति नूनमेव ।
जित्वा रिपूनधिगमिष्यसि राज्यसौख्यं मृत्वाऽपुनर्भवपदं च निवर्त्तशून्यम्

धैर्यं च शौर्यमतुलं बलपौरुषं च तेजस्वितां समवलोक्य मनस्वितां च ।
सूर्यः पिता समरमध्यमुपागतस्य दद्याज्जयं किमुत ते विमलं स्वरूपम् ८१

उक्त्वेति भाषितमृतव्रतधारिधुर्यः सद्ब्रह्मचर्यनिरतश्च पितामहोऽसौ ।
आघ्राय कार्णिकशिरो नितरां प्रसीदन् स्वाशीर्भिरर्चितमिमं व्यसृजद् रणाय

आज्ञापितः स वसुषेण उवाच भूयो हे भारताभिजनविश्वनृपालवत्य ।
हेहे पितः पितुरपि प्रणतस्तवाङ्घ्रिं याचे प्रमादजनितं क्षमतां ममैनः८३

उदीर्यकरुणान्वितो नयनवारिधारां वहन्,
वचः कृतप्रदक्षिणः पितृपितुश्च पादौ स्पृशन् ।
सुयोधनविपक्षिणामखिलभूभृतां मानिना-
मसुक्षयसमुद्यतः शिविरमायादसौ सत्वरम् ॥८४॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये षोडशः सर्गः समाप्तः

—:०:—

## अथ सप्तदशः सर्गः

महारथे सैन्यपतौ पितामहे सुरेन्द्रपुत्रेण रणे निपतिते ।
अनाथया कौरवसेनयाऽनया शुचो महत्यो बिभराम्बभूविरे ॥१॥

ऋते बलीयोऽपि च सैन्यनायकं भवेन्न संयोद्धुमलं बलं क्वचित्
इति स्म चिन्ताशतमाकुला दधे सुयोधनस्यार्त्तिहता पताकिनी ॥२॥

बिभर्त्ति भैष्मीं समतामिहैककः स एव कर्णः प्रवरो न चापरः
यदाऽऽव्रजेदेष विपक्षदर्पहा तदास्मदीयं कुशलं न चान्यथा ॥३॥

निशम्य सर्वध्वजिनीमुखस्थितं समाह्वयं स्वं शिविराद् विनिर्गतः ।
स कर्ण आयोधनवैरिभीतिदं दधार वीरोचितवेषमात्मनः ॥४॥

उरःशिरोदोःप्रभृतिस्वविग्रहा-वनोपयुक्तं रणवस्तुसञ्चयम् ।
धनुः सतूणीरमथास्त्रशस्त्रकं दधन्निजस्यन्दनमास्थितोऽभवत् ॥५॥

सुदुस्सहैरात्मरथोत्थघर्घरस्वनैर्धरित्रीमखिलां प्रकम्पयन् ।
युगान्तकालक्षयकारकान्तकोपमानतां बिभ्रदसौ व्यराजत ॥६॥

रणार्थमायान्तमिमं महाबलं प्रसेदुरालोक्य निजा रणस्थिताः ।
क्षिपन्त उच्चैरिह वस्त्रमायुधं मुदान्विताः स्वागतमस्य चक्रिरे ॥७॥

स्वशङ्खमुच्चैसरकौ निनादयन् विपक्षिणां सञ्जनयन् परं भयम् ।
उपागमत् कौरववंशभूपतिं निरस्तसन्तापचोऽब्रवीदिदम् ॥८॥

उपायमादिष्टवता मृतेः स्वयं हितं भवन्निग्रमुपेक्ष्य चात्मनः ।
महेषुपर्यङ्कतलं समाश्रितं पितुस्तु पित्रा भवितव्यतेदृशी ॥९॥

त्रिलोकवन्द्यं कुरुवंशपङ्कजप्रभाकरं वृद्धमजेयपौरुषम् ।
प्रपद्य तं शान्तनवं महामतिं रणार्थमद्यास्मि निदेशमाप्तवान् ॥१०॥

यथा मृगेन्द्रो मृगवृन्दमोजसा महीयसा हन्ति वनान्तरेऽञ्जसा ।
बलान्यहं सम्प्रति धर्मजन्मनो निपत्य मथ्नामि रणाङ्गणे तथा ॥११॥

प्रगर्वमाखर्वयतः स्वविद्विषां स्वसैनिकान् हर्षयतः समन्ततः ।
नृपः स कर्णस्य तु कर्णसौख्यदां प्रवृत्तिमाकर्ण्य बभूव मोदभृत् ॥१२॥

अवोचदालोकवचःपुरस्सरं सुयोधनो मित्रवरेण्य साम्प्रतम् ।
त्वदीयसन्दर्शनमाप्य विक्लवाः समुच्छ्वसन्तीव चिराय मेऽसवः ॥१३॥

विधेयमेतर्हि किमस्ति मामकं निदेशदानेन कृतार्थयस्व माम् ।
हितानुबन्धी परमः सहायकश्चमूपतिर्वा सचिवस्त्वमेव मे ॥ १४ ॥

समस्तराज्यं सह बन्धुबान्धवैर्मदीयसर्वस्वमये त्वदर्पितम् ।
ब्रवीतु सेनाधिपतेः पदेऽर्हिते प्रतिष्ठितः कः पुरुषो भवेदिति ॥१५॥

निशम्य दुर्योधनभाषितं त्विदं जगाद कर्णो विनयाञ्जलिं वहन् ।
स्वयं भवानस्ति नृपेन्द्र बुद्धिमानवैति सम्यक् स्वहिताहितानि च ॥१६॥

अनेकशः सन्ति निबद्धसौहृदास्त्वयि प्रगल्भाश्च रणाङ्गणे भृशम् ।
कुलीन-धर्मज्ञ-महास्त्र-शस्त्रभृद्वरेण्य-वीरा महनीयकीर्तयः ॥१७॥

विचिन्त्य तेषां यदि कोऽपि पूरुषः प्रतिष्ठितः स्याद् ध्वजिनीपतेः पदे ।
तदाऽपरे मानभृतोऽपमानतः समाचरिष्यन्ति मुदा न संगरम् ॥१८

न संविधास्यन्ति हि ते समादरं न मानयिष्यन्ति निदेशमस्य च ।
पुरैतदालोच्य चमूपतेः पदेऽभिषेचनीयः सकलैः समादृतः ॥१९॥

यदाऽस्ति काम्या मम सम्मतेस्तदा स एष आचार्यवरोऽस्त्वधीश्वरः ।
बलस्य तेऽसौ प्रवयाः सदस्त्रविद् यतः समेषामपि धर्मतो गुरुः ॥२०

नृपाः समे तस्य पदाब्जवन्दनं प्रकुर्वतेऽह्णां पथमभ्युपेयुषः ।
बलाधिपत्यं गमिते गुरौ ध्रुवं प्रसादमाप्स्यन्ति समस्तभूभृतः ॥२१॥

ग्रहीष्यते माल्यमिवानुशासनं तदीयमन्तर्मुदितैर्नताननैः ।
नरेन्द्रवर्य्यैः प्रथमैर्मनस्विनामतोऽभिषेच्यः स बलाधिपास्पदे ।२२॥

गिरं स कर्णस्य निशम्य सूनृतां प्रधानसेनापतिसत्पदे गुरुः ।
सुयोधनेनात्तमुदाऽभ्यषिच्यत महान्तमानन्दमधुः समे नृपाः ॥२३॥

नवीनमुत्साहमुपेत्य कौरवी चमूस्तदाचार्यवरेण चालिता ।
समस्तवीरादृतकर्णरक्षिताऽभियानमातन्वत वैरिमण्डले ॥२४॥

गृहीतशस्त्रास्त्र उपस्थितो रणे दिनेशपुत्रोऽखिलवैरिमर्दनः ।
अतीतसंख्यान् नृपतीन् बलीयसश्चकार कीनाशनिकेतनातिथीन् ॥२५॥

प्रयुध्यमानस्य पताकितीपतेः स भीमसेनस्य रथं ससारथिम् ।
हयान् कृपाणांश्च गदां शरासनं व्यचूर्णयत् तस्य समस्तमायुधम् । २६॥

निगृह्य भीमं हतसाधनं तदा यमालयं प्रेषयितुं स ईश्वरः ।
परन्तु मात्रेऽर्पितमात्मनो वचो नुसृत्य हित्वा तमथाब्रवीदिदम् ॥२७॥

इतः पलायस्व वृकोदर द्रुतं भटो मतस्त्वं परमोऽसि भोजने ।
पुनः समायाहि न कर्णसन्निधावितस्ततो दर्शय विक्रमं निजम् ॥२८॥

समाश्रय त्वं नृपते र्महानसं तदाधिपत्यं च कुरुष्व केवलम् ।
विभीषयस्वाश्रितदासपूरुषान् विहाय संग्राममितो व्रज द्रुतम् ॥२९॥

शरासनस्योत्कटकोटितः पुनः पुनस्तदीयोदरमेष तुन्दिलम् ।
निहत्य संयत्यवमत्य पाण्डवं प्रभञ्जनापत्यममुं समत्यजत् ॥३०॥

तदेद्धकोपोऽतिरथोऽर्जुनात्मजोऽभिमन्युनामाऽवतरद् रणाङ्गणे ।
तदीयमालोक्य महापराक्रमं महारथाश्चापि विमूढतां ययुः ॥३१॥

प्रधानसेनाधिप ईश्वरो बलीयसां स आचार्यवरोप्युपेयिवान् ।
नितान्तमाश्चर्यमतः प्रचक्रमे महौजसस्तस्य वधाय कोपनः ॥३२॥

चमूपतेर्व्यूहमभेद्यमप्यसौ विवेद भेत्तुं किल चक्रनामकम् ।
युधिष्ठिराज्ञां समवाप्य बालकः विभिद्य चान्तः प्रविवेश निर्भयः ॥३३॥

महेशलब्धाद् वरदानतो बली जयद्रथस्तत्र गतो महारथः ।
युधिष्ठिरं स्वीयवरेण्यसैनिकैः सहानुयान्तं रुरुधे प्रसह्य सः ॥३४॥

जयद्रथ-द्रौणि-कृतादिवर्मभिः कृपाह्वय-द्रोण-दिनेशनन्दनैः ।
अनेकशोऽन्यैः प्रबलैर्महारथैरसावधिव्यूहमरुध्यतार्भकः ॥३५॥

निरस्तशस्त्रो विहितः पुरा ततो रणान्तराले मिलितैर्महाबलैः ।
अहोवतासावसहाय एककोऽतिनिर्दयैस्तैर्वियुतः कृतोऽसुभिः ॥३६॥

प्रधानहेतुं निधने जयद्रथं धनञ्जयोऽवेत्य निजात्मजन्मनः ।
निहत्य तं केशवकूटनीतितः प्रतिश्रुतिं स्वां स च पर्यपूरयत् ॥३७॥

ततोऽभवद् युद्धमतीव भीषणं दलद्वयेऽन्योन्यजयस्य वाञ्छया ।
जगन्ति विष्वक् प्रलये जिघत्सितुं करालचण्डीकृतरौद्रनृत्यवत् ॥३८॥

अलायुधः कौरवपक्षमाश्रितो घटोत्कचो भीमसुतो ह्यविद्यत ।
समस्तमायाचणराक्षेश्वरौ महाबलौ द्वावपि तौ बभूवतुः ॥३९॥

अलायुधस्य प्रियबन्धुरेकदा सुतेन वायोर्विनिपातितोऽभवत् ।
अशर्म मर्मान्तमुपेयुषा ततः क्रुधाऽमुना भीमवधः प्रतिश्रुतः ॥४०॥

सुयोधनप्रेरित एष संगरे निहन्तुमागाद् बत वातनन्दनम् ।
तदा निजं तातमसौ घटोत्कचः सुरक्षितुं संयुयुधे स्ववैरिणा ॥४१॥

प्रचक्रतू राक्षसपुङ्गवावुभावतन्द्रितौ चाविरतौ दिवानिशम् ।
विवृद्धमन्यू प्रधनं परं महद् यतः परां ग्लानिमिदं जगद् ययौ ॥४२॥

स्वमायया प्रसृतयाऽतिघोरया निकृत्य शस्त्रास्त्रमलायुधस्य सः ।
न्यपातयत् तं प्रबलो घटोत्कचश्चमूस्ततः सुप्रससाद पाण्डवी ॥४३॥

वपुः करालं पुनरेष संदधन्महारवो मन्दरभूधरोपमः ।
उपद्रवन् कौरवसैन्यसागरं प्रसह्य तं प्रोन्मथितुं प्रचक्रमे ॥४४॥

निशाचरस्यास्य कृतैर्भयावहैर्महाप्रहारैरतिजर्जरीकृतम् ।
शुचाऽतिमम्लौ युधि कौरवं बलं मदच्युतेभेन यथाऽऽविलं सरः ॥४५॥

निशातशस्त्रास्त्रसमूहवर्षणैररुन्तुदैस्तेन कृतैर्निरन्तरम् ।
बलानि संग्राममपास्य दुद्रुवुः सुयोधनस्योन्मथितानि सर्वतः ॥४६॥

पलायमानानपि सैनिकान् रिपूनधर्ममायोधनवर्जमाश्रयन् ।
जघान भीमात्मज एष निर्दयो भवन्त्यधर्माचरणा हि राक्षसाः ॥४७॥

प्रपीड्यमानाः पिशिताशनेन ते भयात्प्रचक्रन्दुरशर्म बिभ्रतः ।
भवेम हा हन्त विनष्टजीवनास्त्वमेहि कर्ण द्रुतमेहि रक्ष नः ॥४८॥

उपेत्य कर्णो रुरुधे निशाचरं स्वसैनिकांस्तान् प्रहरन्तमायुधैः ।
विपक्षिणोऽन्यान् समपास्य रक्षसा समं तदानीं युयुधे क्रुधाऽन्वितः ॥४९॥

क्षपाचरः सोऽखिलमायिनां वरश्चकार युद्धं न नरोचितं खलः ।
अशिश्रियद् विष्णुपदं कदाचन कदापि चायुध्यत भूमिगोचरः ॥५०॥

क्षणाददृश्यः प्रभवन् स्वमायया क्षणादसंख्यातवपूंषि धारयन् ।
क्षणेन रूपं विकरालमुद्वहंश्चमूममथ्नान्नितरां स कौरवीम् ॥५१॥

गताः समे हन्त महाभयान्धतां परस्वकज्ञाननिरस्तबुद्धयः ।
रिपून्निरस्य स्वबलान्यपीडयन् विवेकशून्याः किल मद्यपा इव ॥५२॥

निशीथमासाद्य निशीथिनीचरो महाबलीयान् भवति स्म दर्पितः ।
तमस्युदीर्णोऽसुररक्षसां बलं प्रकाशभीतिं दधतां प्रवर्धते ॥५३॥

भजत्सु निद्रां शिविरेषु निर्भयं चकार दुर्योधनपक्ष-योद्धृषु ।
सुयन्त्रविभ्रन्नलिकास्त्रनिर्गतप्रभूतचञ्चद्गुडकप्रवर्षणम् ॥५४॥

दिनेशजाश्वासनदानतोऽप्यहो व्यपेतधैर्यं प्रबभूव तद्बलम् ।
भयेन चक्रन्द रुरोद दुःखनं जगाद संगोपय कर्ण नोऽधुना ॥५५॥

सुरेन्द्रदत्तां निजशक्तिमञ्जसा जहि प्रयुज्येति निशाटनं त्विमम् ।
नितान्तविभ्यत्प्रसरत्स्वसैनिकार्त्तिनादमाकर्ण्य स दुःखितोऽभवत् ॥५६॥

विमोहितः श्रीयदुनाथमायया सुरक्षितामर्जुनघातिनीमसौ ।
अमोघशक्तिं रिपुनाशविश्रुतां सुरेन्द्रलब्धां प्रयुयुज राक्षसे ॥५७॥

तदीयविस्फूर्जितवीर्ययोगतो विनष्टमायाबल एष दुर्मतिः ।
पपात भूमावुरुभूधरोपमः सहस्रशः खण्डितनैजविग्रहः ॥५८॥

प्रकम्पितक्ष्मापतिवीरमानसे महोग्रशत्रौ प्रहते घटोत्कचे ।
समुद्विवेल्लातिशयं सुयोनाश्रितध्वजिन्या हृदि मोदवारिधिः ॥५९॥

महेन्द्रशक्तिर्वसुषेणहस्ततो विनिर्गता शत्रुवधं प्रकुर्वती ।
द्रुतं पुनर्जिष्णुवचोऽनुसृत्य सा सुरेश्वरं नाकपतिं समाश्रिता ॥६०॥

रवेः सुतस्तन्मघवाप्तशक्तिदुष्प्रयोगविभ्रान्तिमसौ यदाऽस्मरत् ।
तदाऽभवत् पूर्वकृतप्रतिज्ञया धनञ्जये चिन्तितचित्तवृत्तिकः ॥६१॥

अजातशत्रुः सह बन्धुबान्धवैर्घटोत्कचे भीमसुते निपातिते ।
अपारशोकाम्बुधिमग्नमानसः प्रकाममुच्चैः प्ररुरोद दुःखितः ॥६२॥

निवर्त्तमानं प्रतिरुध्य शत्रुभेर्निजाग्रजस्यात्मजनाशवार्तया ।
शुचा परिक्लान्तमथार्जुनं हरिः पुनः पुनस्तं हि समोदमास्वजत् ॥६३।

महाबले वैरिमनोव्यथाकरे हते च तस्मिन् युधि भीमनन्दने ।
रुदत्सु सर्वेषु युधिष्ठिरादिषु बभूव कृष्णः स मुदा परिप्लुतः ॥६४॥

कपिध्वजो माधवमुक्तवान् हरे गतिर्विचित्रा तव दृश्यते प्रभो ।
दुरन्तदुःखाम्बुनिधौ निमज्जतो निरीक्ष्य मोदातिशयं बिभर्षि नः ॥६५।

विहस्य चालिङ्ग्य पुनः पुनर्मुदा हरिः प्रपन्नार्तिहरो जगाद तम् ।
महाभयाद् भानुतनूजसम्भवात् सखे त्वमद्यैव विमुक्तिमाप्तवान् ॥६६॥

त्वदर्थमिन्द्रः कवचं च कुण्डले जहार कर्णस्य ऋतात्मनः पुरा ।
तदीयविश्राणितशक्तिरप्यसौ निहत्य भैमिं प्रथिता तमत्यजत् ॥६७॥

तथापि धर्मात्मधुरि प्रतिष्ठितं महौजसं तं किल धर्मसङ्गरे ।
सुरेश्वरो नास्त्यभियातुमीश्वरो भवादृशां हन्त नृणां तु का कथा ॥६८॥

धनुः शरं वाप्यथ शस्त्रमस्त्रकं ग्रहिष्यते यावदमुष्य पाणिना ।
न तावदेनं प्रधनार्थमुद्यतं सुरासुराश्चापि निहन्तुमीश्वराः ॥६९॥

प्रसक्तचित्तोऽन्यविधौ भवेदयं न शस्त्रमस्त्रं विभृयात् करोऽस्य च ।
तदा स वध्यो भवता ममाज्ञया स्वमानसे धर्मविचारमुज्झता ॥७०॥

वरेण्यवर्णाश्रमधर्मरक्षिणां नृणां विपक्षक्षयमत्र भूतले ।
वदन्ति लाभं परमं विपश्चितो महानुभावा विधया कयापि च ॥७१॥

स्वकीयमादेशमिमं धनञ्जयं प्रपद्यमानं शिरसा नतेन सः ।
भृशं परिष्वज्य रथं नुदन् हरिर्न्यवर्तत स्वप्रणतप्रसादकृत् ॥७२॥

अपास्य स्वां शक्तिं परमरिपुहन्त्रीमधिगतां
सुरेन्द्रात्कर्णोऽसाववितथनियोगां रणभुवः ।
निवृत्तः किन्त्वस्याणुरपि न चोत्साहविरतिः
सदा शूरस्त्वान्तं जयमजयमेकं हि मनुते ॥७३॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये सप्तदशः सर्गः समाप्तः

—:०:—

## अथ अष्टादशः सर्गः

एष आचार्यदेवोऽप्यहःपञ्चकं कौरवाशेषसैन्यानि सञ्चालयन् ।
युद्धभूमावसंख्यातवीरक्षयं संव्यधादुग्रशौर्यं निजं दर्शयन् ॥ १ ॥

मत्स्यराजं विराटं महाविक्रमं द्रौपदीतातपाञ्चालराजं तथा ।
युद्धकृद्वैरिवीराननेकानसौ स्वर्गवास्तव्यतामञ्जसा प्रापयत् ॥ २ ॥

शूरसेनापतिर्द्रोण आयोधने युद्धभूमावयं यां डुढौके दिशम् ।
सैव विध्वस्तवीराऽभवत् सत्वरं सर्वशस्त्रास्त्रचुञ्चुं गुरुं कः श्रयेत् ॥३॥

चिन्तया ग्रस्तचेता भवन् माधवः पाण्डवानाह्वयत् तानगादीदिदम् ।
यावदाचार्यहस्ते धनुःसायकौ स्तो न तावत् सुरेन्द्रोऽपि तं जेष्यति ॥४॥

योत्स्यते चेत् पुनश्चैष एकं दिनं तर्हि युष्माकमेकोऽपि सैन्येष्वहो।
ख्यातवीरो ध्रुवं नावशिष्टो भवेद् बाध्यते चिन्तयाऽतो मदीयं मनः ॥५

धर्ममप्युज्झ्य वाऽसत्यमाश्रित्य वा कौशलेन च्छलस्यापि वा छद्मनः।
येन केनाप्युपायेन जह्यादसून् एष, एतर्हि पन्थाः स आश्रीयताम् ॥६

प्राणतोऽप्यात्मजं स प्रिय मन्यते तस्य मृत्युं समाकर्ण्य सद्यो ध्रुवम्।
हास्यति स्वीयमस्त्रं गुरुः संगरे हन्यतां शोकमग्नस्तदानीमसौ। ७

द्रोणपुत्रस्त्वजेयोऽजरश्चामरः शक्तिरास्ते न कस्यापि हन्तुं त्विमम्।
तद् रहस्यं विदित्वाऽपि मायापतिस्तान् न्यगादीदिदं भक्तसन्तापहा ॥८॥

श्रीपतेः सम्मतिः सात्वधर्माश्रिता पाण्डवेभ्योऽखिलेभ्योऽपि नारोचत।
वैरिदर्पापहा वीरचूडामणिर्जिष्णुसूनुर्निजे हृद्यचेखिद्यत ॥ ९ ॥

धर्मराजोऽवदत् का कथा विद्यते भूर्भुवर्लोकयोः कृष्ण साम्राज्ययोः।
प्राप्नुयाञ्चेत् त्रिलोकाधिपत्यं यदा नानृतां वाचमुच्चारयेयं क्वचित् ॥१०

वीरनिध्यात्मजायाः पतेर्मायया भ्रान्तदेवर्षिपित्राद्यया ऽचिन्त्यया।
जीवने यः सदा सत्यसेवी नृपः सोऽप्यभूत् सत्यशत्रुर्विचित्रं न तत् ॥११

बोधयित्वा पुनर्भीमसेनं हरिः प्राह सेनापतिं कौरवाणां द्रुतम्।
द्रोणमाख्याहि पुत्रस्त्वदीयो हतः किं विधत्से त्वमेतर्हि युद्धं वृथा ॥१२॥

इन्द्रवर्माह्वयस्य प्रसिद्धो द्विपो मालवेन्द्रस्य च द्रौणिनामाऽभवत।
तं गदाघाततो घातयित्वाऽवदद् द्रोणमागत्य भीमो निदिष्टं हरेः ।१३॥

भीमवाचं निशम्यापि सेनापतेश्चेतसि प्रत्ययो नाणुरप्युद्बभौ।
भर्त्सयित्वा तु शश्वद्गतेरात्मजं संगरे व्यापृतोऽसावबोभूयत ॥१४॥

ब्रह्मवाय्वग्निनामप्रसिद्धैरसौ दिव्यशस्त्रास्त्रपुञ्जैः प्रमथ्नन्नरीन्।
ईशमाय्याहृतात्माऽमरेऽप्यात्मजे प्राणनाशस्य सन्देहमासादयत् ॥१५॥

द्रोण आचार्य आम्नाति चित्ते निजे यत् स धर्मात्मजो नानृतं संवदेत् ।
भौमराज्यस्य वार्त्ता तु दूरस्थिता चेत् त्रिलोकाधिपत्यं च लब्धं भवेत्१६

धर्मराजं स पप्रच्छ हे सत्यवाग् वायुपुत्रो वदत्येष यत्ते सुतः ।
युद्धभूमौ हतः किन्तु तस्योदिते नैव चेतस्युदेति प्रतीतिर्मम ॥१७॥

सत्यमूर्त्तिस्त्वमस्यङ्ग धर्मे रतो नानृतं वाक्यमुक्तं कदाचित्त्वया ।
मामतो ब्रूहि किं मे सुतः साम्प्रतं जीवितो वा मृतो वेति सत्य वद ॥१८

सच्चिदानन्दधामा स्वयं माधवः स्वाङ्गितेनानृतव्याहृतौ प्रेरितः ।
चिन्तया ग्रस्ततामैत् स धर्मात्मजो नैजकर्त्तव्यतामूढतामाप्तवान् ॥१९॥

वायुपुत्रस्तदोपेत्य धर्मात्मजं प्राह मन्दस्वरं नानृतं भूपते ।
किञ्चिदत्रास्ति यन्मालवेन्द्रद्विपस्तत्सनामा हतोऽसौ मया साम्प्रतम् ॥२०

सत्यवादी स धर्मात्मजो नैहतासत्यवाचं प्रयोक्तुं परन्त्वैश्वरीम् ।
को नु मायामतीयान्नरो भूतले धर्मसूनुस्तया मुग्धतां प्रापितः ॥२१॥

स्वीयसाम्राज्यलोभाज्जयेषी नृपो दीर्घमाह स्म यच्चाश्वयुक्त्थामकः ।
मृत्युमाप्तस्ततः प्राह हस्ती शनैः शौरिरेतर्हि शङ्खध्वनिं प्राकरोत् ॥२२॥

हस्तिशब्दं न शुश्राव सेनाधिपः स्वात्मजं मृत्युमाप्तं प्रतीत्याऽप्यसौ ।
पूर्ववद् ध्वंसयामास विद्विट्चमूं भीमसेनस्तदा भर्त्सयामास तम् ॥२३॥

द्रोण भो एक एवास्ति ते पुत्रकः सोऽपि शेते हतो हन्त युद्धस्थले ।
जानताऽपि त्वया साम्प्रतं युध्यते त्वं ध्रुवं निर्दयः क्रूरकर्माऽधमः ॥२४

नीच एतादृशो भूसुराणां कुले कः समुत्पत्स्यते योऽन्धसां लोलुपः ।
आत्मजे प्रेयसि स्वर्गलोकं गते घोरहिंसाविधाने य आस्ते रतः ॥२५॥

आर्षवाचा स्वयं चाप्यवेत्यान्तिमं कालमास्थाय पद्मासनं सत्वरम् ।
अस्त्रशस्त्रं परित्यज्य संस्थो रथे ब्रह्मणो ध्यानमेषोऽन्वतिष्ठद् यदा ॥२६॥

पृष्ठतः क्रूर आगत्य पापात्मको द्रौपदिः सञ्चकर्त्ताथ तन्मस्तकम् ।
ब्रह्म धाम प्रतस्थे नुतः सोऽमरैस्तच्छरीरं रथात् संपपात क्षितौ ॥२७॥

कौरवाणां तथा पाण्डवानामपि म्लानचेतांसि दुःखं परं भेजिरे ।
वाहिनी तस्य दुर्योधनस्यार्त्तिभृद् सर्वतः संप्रदुद्राव भीता सती ॥२८॥

स्वर्गते द्रोणदेवे स दुर्योधनः सन्दिहानः स्वकीये जयेऽभून्नृपः ।
एतदीया जयाशा तदा केवलं निर्विभर्त्त्येकवीर दिनेशात्मजम् ॥२९॥

भूत्रये सोऽस्ति कर्णो महीयान् बली मन्यते मत्प्रियार्थं तृणं स्वानसून् ।
चिन्तयित्वेति दुर्योधनो भूपतिः कर्णकाभ्यर्णमागात् सह द्रौणिना ॥३०॥

सन्दधानः परां नम्रतां सोऽब्रवीन्मित्र हे कर्ण हे शत्रुसम्मर्दन ।
युद्धपोतस्य मे कर्णधारो भवांस्तारयस्वाऽथ वा मज्जयस्वाऽथ वा ॥३१॥

वीरचूडामणिर्भीष्मदेवोऽधुना सायकानां स पर्य्यङ्कमालम्बते ।
ध्वस्तदेवासुरः सर्वशस्त्रास्त्रविद् द्रोणदेवोऽपि हाहन्त शेते मृतः ।३२॥

वीरुदालम्बते मे जयाशाभिधा त्वत्कमूर्जस्विनं बाहुकल्पद्रुमम् ।
सिच्यतां वाऽथवा ग्लानिमापाद्यतां त्वत्कृपा यादृशी तादृशी तद्गतिः ३३

कर्ण आकर्ण्य वाणीं स दौर्योधनीं तं न्यगादीदये मित्र चिन्तां त्यज ।
युद्धभूमौ सकृष्णानहं पाण्डवान् नूनमेतान्न विजेष्येऽन्यशत्रूनपि ॥३४॥

दीनतां क्लीवतां शोकमोहौ तथा खेदमन्तर्विषादं जहीहि द्रुतम् ।
शत्रुसेनां प्रमथ्नामि गत्वा रणे सैनिकान्न स्वान् प्रकामं समुत्साहय ॥३५

सूर्यसूनोर्गिरोत्साहसम्पूर्णया धार्तराष्ट्रः स आश्वस्तचित्तो भवन् ।
द्रोणजन्मानुमत्या धरित्रीसुरान् संस्तुतान् वेदविज्ञान् समानाययत् ॥३६

आत्मसेनाधिपत्यास्पदेऽभ्यर्हिते कर्णमेनं प्रसन्नाननो भूपतिः ।
वेदमन्त्रैः शुभैः प्रत्यतिष्ठापयत् तेन सर्वे प्रसेदुर्विषेदुः परे ॥३७॥

औपलक्ष्येऽभिषेकस्य दुर्योधनो भूसुरान् भोजयामास संख्यातिगान् ।
कोट्यतीताश्च दीनारमुद्रास्तथा संव्यतार्षीच्च तेभ्यः प्रमोदान्वितः ॥३८॥

वैदिकानां मुखेभ्यः समुच्चारिताः स्वस्तिवाचः समाकर्णयन्नग्रतः ।
स्यन्दनं स्वं समारुह्य सिंहध्वनिं व्याचकार द्विषद्गर्वविध्वंसकम् ॥३९॥

द्यौर्धरित्री च भूयः पराकम्पत ज्ञायते यल्लयः किं स्विदाविर्बभौ ।
ससृतिं संजिहीर्षन्नदम्भोनिधिः साम्प्रतं सर्वतः किं जरीजृम्भते ॥४०॥

किं स्विदेष प्रचण्डानिलप्रोद्धताम्भोधराणामुपाढौकते मण्डलः ।
अन्तकृत् किं कृतान्तोऽथवाऽयात्ययं प्राणिवर्गं समाहर्त्तुकामः स्वयम् ॥४१

भीष्मकद्रोणयोर्यन्महाप्राणयोर्वन्द्ययोर्देवताभिश्च धर्मात्मनोः ।
गर्हितां रीतिमाश्रित्य किं हिंसया चात्रधर्मः क्रुधाऽऽयात्ययं देहभृत् ॥४२

ढौकमानेऽतितिग्मद्युतेरात्मजे संगरायेति नृणामभूद् विभ्रमः ।
कर्णमेनं विलोक्यैव यौधिष्ठिरं भीतमत्यन्तमन्तश्चकम्पे मनः ॥४३॥

धर्मजन्माऽर्जुनं प्राह दीनं वचो द्रोणभीष्मौ बहून् सोदरान् वैरिणः ।
शत्रुशूरानपि त्वं रणेऽपातयः किन्तु कर्णो बलीयानयं जीवति ॥४४॥

एष कर्णो महेष्वास आस्ते क्षितौ देवदैत्या मिलित्वाऽपि तं संगरे ।
नैव जेतुं क्षमा इत्यतो मानसं क्षुब्धमाप्नोति कम्पं ममाहर्निशम् ॥४५॥

दानवीरश्च सत्यप्रतिज्ञोऽप्ययं कीर्त्तनीयश्च धर्मात्मनामग्रतः ।
द्रोणतो वा तथा भीष्मतो वा रणेऽभ्यर्हितो धीरधोरेय आस्ते ध्रुवम् ४६

द्वादशेभ्यः स संवत्सरेभ्यः सदा तीक्ष्णशल्योपमो मेऽतिदुःखप्रदः ।
यद्ययं हन्यते वैरिमूर्ध्नि स्थितः सम्भवेत् तर्हि नूनं मदीयो जयः ॥४७॥

केवलं तद्बलेनैव दुर्योधनो युद्धमारब्धवान् कूर्दतेऽहर्निशम् ।
निर्जितेऽस्मिंस्त्वया शत्रुचूडामणौ निर्जितं धार्त्तराष्ट्रं हि सम्भावये ॥४८॥

भूपते त्वं कदाचिन्न चिन्तां भज वासुदेवस्य साहाय्यतो वैरिणम् ।
कर्णमेनं हनिष्याम्यहं संगरे स्वाग्रजं वाक्य मेत्थं जगादार्जुनः ॥४९॥

अर्धचन्द्राकृतिं व्यूहमारीरचत् सव्यसाची निजं तस्य सन्धिस्थले ।
देववैद्यात्मजौ भीमसेनादयो वीरमूर्धन्यभूता व्यवस्थापिताः ॥५०॥

ऊष्णरश्मेस्तनूजोऽपि तद्वद् वरं व्यूहमत्यन्तदुर्भेद्यमेषोऽरिभिः ।
संरचय्य प्रधानस्थले स्वान् महास्यन्दनान् स्थापयामास वीरेश्वरान् ॥५१

व्यूहकस्याग्रभागे धनुःसायकं वक्षसो रक्षकं सन्दधानो दृढम् ।
एष कर्णो यदा स्यन्दनस्थो भवज्ज्ञायते वीरनामा रसो देहभृत् ॥५२॥

दिव्यरूपं महोत्साहपूर्णं रणे बिभ्रतं स्वीयसेनापतिं नूतनम् ।
तं विलोक्यैव दौर्योदनी वाहिनी पाण्डवाञ्जेतुकामा मुदाऽभ्याययौ ५३

शूरमूर्धन्ययोर्भीष्मकद्रोणयोर्मृत्युमेषा विसस्मार मोदान्विता ।
पाण्डवांस्तान् पराजेतुमिच्छावती सिंहनादैः प्रतिध्वानयामास खम् ५४

मानवव्याघ्र आत्मप्रतिज्ञावचः पालयत्येव घोरासु चापत्स्वपि ।
स्वार्थबुद्ध्या नरो यस्तु तद् बाधते गण्यते साधुभिः सोऽधमः पूरुषैः५५

मन्यते संस्तुतात्मा स धर्मात्मभिर्येन चापत्तिकाले नरोपस्थिते ।
रक्ष्यते स्वीयधर्मो जयो वाऽजयः सम्भवत्येव पुंसां सदा संगरे ॥५६॥

युध्यते धर्मरक्षाकृते क्षत्रियैः क्रोधविद्वेषबुद्धिः परित्यज्यते ।
नाप्यधर्माश्रिता रीतिराश्रीयते वीरतायाः कलङ्कस्वरूपा हि सा ॥५७॥

भूपतिः कौटिलीं नीतिमालम्बते वक्ति चान्यद् विधत्तेऽन्यदायोधने ।
किन्तु कर्त्तव्यबुद्ध्या स्वधर्मं श्रयन् हन्यते वा पराजीयते सोऽर्हितः॥५८

पाण्डवा अस्य चत्वार आसन् वशे तं विहायार्जुनं किन्तु सूर्यात्मजः ।
स्वप्रतिज्ञामनुसृत्य मात्रेऽर्पितां प्राणदानं विसृष्टाः क इत्थं चरेत् ॥५९॥

षोडशाहे ध्वजिन्याधिपत्यं गतः सन्निषूणां महावर्षणैः पाण्डवीम् ।
छादयामास सेनां प्रमाथी द्विषामग्रतः प्राप युद्धार्थिनं नाकुलम् ॥६०॥

धर्मसूनोर्लघुर्बन्धुरेषोऽवदत् त्वं समायाहि रे सूतपुत्राधम ।
सर्वदाऽहं त्वदन्वेषणे संरतो भाग्यतस्त्वामरे नीच सम्प्राप्तवान् ॥६१॥

वैरभावस्य मूलं त्वमन्योन्ययोर्भारतीयान्वयस्यैकविध्वंसकः ।
धर्मराजं नृपं त्वां निहत्याऽधुना कामये संविधातुं प्रमोदान्वितम् ॥६२॥

तस्य वाचं निशम्य प्रसन्नाननोऽवोचदुच्चैर्विहस्यांशुमाल्यात्मजः ।
क्षात्रधर्मोचितामङ्ग वाणीं तवाकर्ण्य मोमुद्यते सौम्य मत्कं मनः ॥६३॥

शत्रुवर्गस्य युद्धार्थमावाहनं तेन साकं च संग्रामचर्या तथा ।
क्षत्रियाणां परो धर्म आम्नायते त्वद्वचो वीरशोभास्पदं मन्महे ॥६४॥

किन्तु योऽम्भोधरो गर्जति प्रोद्धतो नैव वर्षत्यसौ प्रायशो दृश्यते ।
कृत्यनुष्ठानहीनो नरो भूतले केवलं हन्त शब्दायतेऽपत्रपः ॥६५॥

पौरुषं क्षात्रतेजश्च चेत् तावकं तर्हि नूनं समायाहि युद्धं कुरु ।
त्वां हनिष्यामि नाहं तथापि त्वया पूर्यतां वासना युद्धजन्याऽऽत्मनः ६६

इन्द्रजन्मानुजः कर्णवाचं तदाकर्ण्य तस्योपरीषून् निरस्यन्निजान् ।
आगतान् वीक्ष्य मध्ये निजैः सायकैः कर्त्तयामास तिग्मांशुसूनुस्तु तान्॥

द्वाविमौ वीरधुर्य्यौ महापौरुषौ युध्यमानावभिख्यानमाजह्रतुः ।
संविनिर्ग्यन्मदोन्मत्तयोः कुञ्जरश्रेष्ठयोर्वाञ्छतोः स्वं जयं संगरे ॥६८॥

विग्रहप्रेक्षणार्थं द्वयोर्वीरयोरेतयोस्त्यक्तयुद्धाः परे सैनिकाः ।
संनिमग्ना महाश्चर्यपाथोनिधावाययुस्ते समन्ताच्च संतस्थिरे ॥६९॥

पाण्डुपुत्रः कदाचिद् रणे प्राभवत् तं कदाचिच्च वीरोऽतिशेतेऽपरः ।
एवमेवानयोर्दीर्घकालं महान् संगरः संबभूवातिभीतिप्रदः ॥७०॥

योधयित्वा रिपुं तिग्मरश्मेः सुतः स्यन्दनं चूर्णयामास शत्रोस्ततः ।
सारथिं घोटकानङ्गरक्षाकृतः सूदयामास तीक्ष्णाशुगैर्भीषणैः ॥७१॥

द्विट् ततोऽसौ पदातिः कृपाणं दधे मुद्गरं तत्परं घोरमप्यायसम् ।
तद्द्वयं युध्यमानस्य संछिद्य स वीरकर्णो जघानाशुगैर्वैरिणम् ॥७२॥

वेगतः प्रद्रुतं तं सपत्नं रणाद् धावमानः स जग्राह सूर्यात्मजः ।
तद्गलेस्वां धनुःसिञ्जिनीमर्पयन् प्राह रे प्राणलोभिन् कथं लायसे ॥ ७३

पाण्डवो व्रीडयाऽधोमुखोऽवस्थितः किंचिदूचे न कर्णस्तदानीमसौ ।
ताडयित्वा भृशं शिक्षयित्वा ततो हस्तगं सत्प्रतिज्ञो व्यमुञ्चद् रिपुम् ७४

व्यसृजदयमरिं तं पाण्डवं सूर्यसूनु-
र्वशमुपनतमेतं स्वप्रतिज्ञाविघातात् ।
अतिशयितसुपर्वा यस्त्रिलोकैकशूर-
स्त्रितयभुवनमध्ये तत्तुलां को बिभर्त्ति ॥ ७५ ॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये अष्टादशः सर्गः समाप्तः

—:०:—

## अथैकोनविंशः सर्गः

प्रियाऽऽस माद्री नरराजपाण्डोस्तत्सोदरो मद्रपतिर्महीयान् ।
पराक्रमी योद्धुमजातशत्रोः पक्षं समाश्रित्य समागतोऽभूत् ॥ १ ॥

दुर्योधनः सात्मजनो नृपालो व्यधत्त तस्याध्वनि सत्सपर्याम् ।
तयाऽऽप्तमोदः स च मद्रभूपो वरं ग्रहीतुं तमथाऽऽदिदेश ॥ २ ॥

स धार्त्तराष्ट्रस्तमुवाच—"राजंस्त्वं पाण्डवानामयि मातुलोऽसि ।
यथा, तथैवासि ममापि साधो वरं ददस्वेति यदासि तुष्टः ॥ ३ ॥

उपेत्य पक्षं नृप पाण्डवानां पक्षं मदीयं समुपाश्रितः सन् ।
युध्यस्व" राजा स्ववचोऽनुसृत्य दौर्योधनीं तां गिरमभ्युपेदे ॥ ४ ॥

कृतानतिं तत्परमेष भूपं धर्मात्मजं स्वीयपुरोऽभ्युपेतम् ।
निजाशिषं कामयमानमेनं मद्राधिपः शल्य उवाच भूयः ॥ ५ ॥

दौर्योधनं पक्षमुपेत्य योद्धुं प्रतिश्रुतं तात मयास्ति, तस्मात् ।
भिन्नं यदिच्छेस्तदहं वचस्ते संग्रामभूमौ प्रतिपालयिष्ये ॥ ६ ॥

निशम्य तद्वाचमसाववोचत् "युध्यस्व भो मातुल सप्रमोदम् ।
पक्षं समाश्रित्य सुयोधनस्य कृतिं त्वमेकां मम संविदध्याः ॥ ७ ॥

रथाश्वसञ्चालन-निष्ठ-विद्याप्रवीण आस्ते न भुवीह कश्चित् ।
भवादृशः, केवलमेककृष्णो जगत्पतिस्त्वत्समतां बिभर्त्ति ॥ ८ ॥

कर्णोऽनुमन्येऽर्जुनतो युयुत्सुर्ध्रुवं विदध्यान्निजसारथिं त्वाम् ।
वचोभिरुग्रैः परुषैस्तदानीं भवान् हतोत्साहमिमं प्रकुर्यात् ॥ ९ ॥

पुनः पुनर्निन्दितविक्रमत्वात् तेजोविहीनो विहतानुभावः ।
भवेदतोऽसौ प्रधनं न कुर्याद् विवृद्धमन्युः स्वबलानुरूपम्" ॥१०॥

स्वभागिनेयस्य वचो नृपालः प्रत्यग्रहीत् दुष्टमतिः स शल्यः ।
ततः प्रतस्थे निलयं स्वकीयं मोमुद्यमानो नृपधर्मराजः ॥११॥

आयोधनात् सप्तदशेऽह्नि कर्णः सुयोधनं प्रातरुवाच—"सौम्य ।
मया हतः स्यादयमर्जुनो वाऽथवाद्य तेनैव रणे हतः स्याम् ॥१२॥

धनञ्जयो मत्समतां न धत्ते शौर्येऽथवा सायकसम्प्रयोगे ।
अभ्यर्हितैर्दिव्यगुणैर्जगत्यामेभिर्गरीयान् मदपेक्षयाऽसौ ॥१३॥

हुताशनः खाण्डवदाहकाले दिव्यं रथं संवितताार तस्मै ।
संयुक्त आस्ते कपिकेतुना यो न भिद्यते केनचिदायुधेन ॥१४॥

सुशिक्षिताः सन्ति तदीयवाहा गाण्डीवमास्तेऽनुपमं धनुश्च ।
सारथ्यमेतस्य च संविधत्ते पूर्णावतारो भगवान् मुकुन्दः ॥१५॥

गाण्डीवतश्चापि कठोरमुग्रं शरासनं राजति मामकीनम् ।
दृढो रथोऽप्यस्ति परन्तु मित्र मनोनुकूलो न हि सारथिर्मे ॥१६॥

पक्षं श्रितो यस्तव मद्रभूपः स चाश्वसञ्चालनसुप्रवीणः ।
गुणी गुणज्ञोऽथ महाबलीयांस्तथा च सारथ्यविधौ पटीयान् ॥१७॥

त्वया निदिष्टो यदि सारथिर्मे भवेदसौ क्षत्रियराजवर्य्यः ।
तदाहमद्यार्जुनमङ्ग युद्धे ध्रुवं विजेष्ये, न हि संशयोऽत्र" ॥१८॥

कर्णोक्तिमाकर्ण्य सुयोधनेन न्यगादि हे कर्ण ममावलम्बः ।
भवानिहैकोऽस्ति, परं न जाने, भवत्कृपातो भविता जयो मे ॥१९।

शूराग्रगण्येषु मृतिं गतेषु संख्यामतीतेष्वपि मामकेषु ।
त्रिलोकविख्यातमहौजसं त्वां निरीक्ष्य चैकं विजयं समीहे ॥२०॥

अन्तर्बहिर्योऽस्त्यसितो हि तेन प्रणुद्यमानाश्वरथं सपत्नम् ।
गाण्डीविनं चेत् कपिकेतुमेनं निपातयेः, पूर्णमनोरथः स्याम्" ॥२१॥

वचस्तदुक्त्वा धृतराष्ट्र-सूनुरुपेत्य मद्राधिपतिं विनीतः ।
नमोवचः पूर्वमुदीर्य भूयः प्रशस्य तं वाचमिमां न्यगादीत् ॥२२॥

विख्यातवीरेषु महारथेषु पुरस्सरो मातुल वर्त्तसे त्वम् ।
पितामहस्याथ गुरोरभावं भवन्तमालक्ष्य न चिन्तयामि ॥२३॥

योद्धाऽद्वितीयोऽस्ति भवाञ्जगत्यामन्वेष्टुमिच्छोरपि यत्नतो मे ।
भवत्समो वीरवरो विपक्षपक्षेषु चाक्ष्णोर्विषयी न कश्चित् ॥२४॥

आयोधनस्याद्य चिकीर्षुरन्तं समीहते कर्ण उदीर्णधन्वा ।
तत्सारथिः स्या यदि मातुल त्वं तरित्रजेन्मे प्रधनाब्धिवारम् ॥२५॥

स कर्णसारथ्यगिरं निशम्य दुर्योधनस्यास्यविनिर्गतां ताम् ।
जज्वाल शल्यो नितरां समन्युः श्रितः सहस्रांशुरिवोत्तराशाम् ॥२६॥

भ्रुवोः कुटी स्वे कुटिले नृपालो विधाय दुर्योधनमित्थमाह—
"वचस्त्वयोक्तं न विमृश्य हीनसमागमाद्धीयत एव बुद्धिः ॥२७॥

आशास्यते नैव मया यदेवमाहूय यत्नेन विमन्यसे माम् ।
भूत्वा कुलीनोऽप्यकुलीनवाणीं समुद्गिरन् यासि कथं न लज्जाम् ॥२८

अहं हि राजर्षिकुलप्रसूतो मूर्धाभिषिक्तोऽपि च भूमिपालः ।
स सूतवंश्यः, किमु जम्बुकस्य दासेरकत्वं भजते हरीशः ॥२९॥

श्रुतौ स्मृतौ ब्राह्मणपुङ्गवानां निदर्शिता राजहिता सपर्या ।
प्रसिद्धधामा नरराजजन्मा किं सेवते हीनजनं जघन्यम् ॥३०॥

निमन्त्रितोऽहं समरे त्वयाऽद्य सपत्नशूरानिह संविजेतुम् ।
न मे परस्यन्दनसम्प्रणोदविधेयमास्तेऽधमदासयोग्यम् ॥३१॥

त्वमेधि निश्चिन्त इह प्रशान्तो व्रजामि युद्धे किल केवलोऽहम् ।
विपक्षिणस्तद्दलमप्यनन्तं विनाशये तूलमिवाग्निरिद्धः ॥३२॥

वर्णाधमो हन्त जघन्यकर्मा सेनापतिश्चेद् यदि सूतजन्मा ।
कुलाभिमानी नरराजधर्मा करिष्यते नैव कदापि युद्धम् ॥३३॥

वचो मदीयं यदि मंस्यसे त्वमन्यं कमप्युत्तमराजवंश्यम् ।
विधास्यसे सैन्यपतिं तदाऽहं समस्तशत्रूंस्तव संहनिष्ये ॥३४॥

नोचेदहं पक्षमुपेत्य तेऽद्य स्वधाम संगन्तुमितः समीहे ।
उक्त्वेति वाचं सहसा नरेन्द्रो मद्राधिपोऽसावुदतिष्ठदस्मात् ॥३५॥

उच्चैर्निजं सारथिमाह भूयो मत्स्यन्दनं शीघ्रमिहानयस्व ।
सेनाः समस्ता अपि मद्रदेश्या मया सह स्वं निलयं प्रयान्तु ॥३६॥

दुर्योधनो मातुलपादपद्मं प्रपद्य सद्यः प्रणतेन मूर्ध्ना ।
जगाद--हे मानवसिंह नैतद् वचोऽब्रुवं त्वां हि विमन्तुमिच्छुः ॥३७॥

गुरुर्मदीयोऽप्यथ पूजनीयः संरक्षकश्चापि शरण्य एव ।
ओजस्विनां त्वं प्रवरो मतो मे त्वमेकमेवास्यवलम्बनं च ॥३८॥

बालोपमानेन धनञ्जयेन न शोभते ते प्रधनं कदापि ।
भवान् गरीयानत एव कर्णो विनिश्चितो योद्धुमनेन सार्धम् ।३९॥

दामोदरः स्यन्दनचालकोऽस्ति धनञ्जयस्येति विदन्ति सर्वे ।
एको भवांस्तत्समतां विधत्ते पराक्रमी नीतिविदां वरिष्ठः ॥४०॥

यथाऽभवत् पाण्डुसुताश्रयोऽसौ तथा भवानाश्रयदो ममाऽद्य ।
सुसम्मतिं प्राप्य सहायतां ते कर्णो ध्रुवं जेष्यति जिष्णुसूनुम् ॥४१॥

यथाऽत्र कर्णश्च कपिध्वजश्च समानवीर्यौ वसुधाधिप द्वौ ।
सद्बुद्धिविद्याबलपौरुषेषु तथैव कृष्णश्च भवांश्च तुल्यौ ॥४२॥

गुणेष्वनेकेषु भवान् गरीयान् विज्ञायते सम्प्रति वासुदेवात् ।
सुनीतिवित्सर्वसमर्थबुद्धेः समानतां नार्हति तेऽत्र कश्चित् ॥४३॥

कार्यं त्वया कारयितुं समीहे तदेव यत् संविदधाति कृष्णः ।
कल्पद्रुमस्येव तवैष कर्णः छायां समाश्रित्य रिपुं विजेता ॥४४॥

स्वामी शरण्यो युधि कर्णधारो भवान् ममास्ते परमो हितैषी ।
त्वया सनाथोऽस्मि विपत्सु मग्नमेतर्हि मामुद्धर मातुल त्वम् ॥४५॥

नृणां समत्वं मधुसूदनेन स्वं साम्यमाकर्ण्य स तुन्दिलोऽभूत् ।
मोदेन शल्यः कुरुराजमेनं प्रसन्नचेता इति वाचमूचे ॥४६॥

मद्रप्रजेशश्च नरेन्द्रकर्णौ दिव्यं शुभं स्यन्दनमास्थितौ तौ ।
निजैर्महोभिर्महितप्रभावौ व्यराजतां द्वाविव तिग्मरश्मी ॥५८॥

उच्चार्यमाणेषु महीसुरेन्द्रैर्वचस्सु सन्माङ्गलिकेषु शल्यः ।
स्वसेव्यशल्योपमतां दधानः कर्णस्य दिव्यं रथमैरयत् सः ॥५६॥

पथि व्रजन् वीरवरः स कर्ण उच्चैरवोचद्--"यदि कोऽपि योद्धा ।
प्रदर्शयेदर्जुनमत्र तस्मै दास्यामि तद्याचितमर्थराशिम् ॥ ६० ॥

भवेन्महेन्द्रो यदि तच्छरण्यस्तद् रक्षकः स्यादथ वासुदेवः ।
तमर्जुनं नूनमहं करिष्येऽतिथिं हि कीनाशनिकेतनस्य ॥६१॥

गृहीतयौधिष्ठिरमन्त्रदीक्षः क्रूरः सुहृच्छद्मधरोऽतिजिह्मः ।
परिच्छदावाप्तसुखाधिवासस्तं दष्टुमारब्ध स शल्यसर्पः ॥६२॥

त्वं सूतजातोऽस्यकुलीनवृत्ती राजेन्द्रजन्मा स च सव्यसाची ।
त्वं युद्धमेतेन न कर्तुमर्हो मृषाऽवगच्छामि विकत्थनं ते ॥६३॥

यदन्तरं जम्बुकसिंहयोश्च शशस्य चैरावतहस्तिनश्च ।
तदन्तरं तेऽधिरथात्मजस्य नृपेन्द्रपाण्डोस्तनयस्य चापि ।६४।

शूरोऽसि शस्त्रास्त्रविदप्यसि त्वं प्रशंसितो वीरवरैः परन्तु ।
त्वया न जीयेत महेन्द्रसूनुश्छागात्मजो नैव वृकं निहन्यात् ॥६५॥

गाण्डीवकोदण्डसमुत्थघोषमाकर्ण्य ते कर्ण हि कर्णरन्ध्रे ।
विदीर्यमाणे समये न शक्तो रणाङ्गणे स्थातुमपि प्रकामम् ॥ ६६ ॥

अतीतसंख्यप्रलयाम्बुदानां निरस्यतो भीमरवं रथस्य ।
श्रुत्वैव ते घर्घरघोषमुग्रं स्यादग्निदत्तस्य हृदि प्रकम्पः ॥ ६७ ॥

श्रीवासुदेवेन सहोपविष्टं श्वेताश्वसंयुक्तकपिध्वजे तम् ।
रथे स्थितं द्रक्ष्यसि पाण्डुपुत्रं भविष्यसीशो न तदाऽऽत्मनस्त्वम् ॥६८॥

हविर्भुजं प्रज्वलितं निरीक्ष्य पतङ्गमाला भासितावशेषम् ।
प्रपद्यते हन्त यथा तथैव त्वमप्ययें यास्यसि नाशमद्य ॥६९॥

ग्रहीतुमिच्छोरिव वामनस्य भग्नोरुकस्योडुपतिं शशाङ्कम् ।
दशां विचित्रामवलोक्य तेऽद्य न जायते कस्य नरस्य हासः ॥७०॥

मृत्युर्नरीनर्त्ति शिरःस्थितस्ते भ्रष्टा मनीषा तव बोभवीति ।
अजातशत्रोः समुपेत्य पक्षं धर्म्यं यतस्त्वं प्रधनं करोषि ॥७१॥

अरुन्तुदं तद्वचनं निशम्य चित्रीयते स्मात्मनि सूर्यसूनुः ।
अवोचदेनं त्वमये मदीयोऽहितोऽसि मद्रेश हितच्छलेन ॥७२॥

वीर्यं च सत्पौरुषमात्मनीनं प्रभावमुत्साहबलं विहन्तुम् ।
सम्बन्धभाक् त्वं रिपुपाण्डवानां नराधमः कामयसे मदीयम् ॥७३॥

मत्तो द्विपेन्द्रः समुपेक्षमाणःश्वबुक्कनं स्वाध्वनि संप्रयाति ।
तथैव सम्प्रत्यवमत्य वाचमग्रेसराम्यत्र रणे त्वदीयाम् ॥७४॥

धनञ्जयं तं विनिपात्य पूर्वं ततोऽधमं त्वां च निपातयिष्ये ।
सहिष्यते को नु विपक्षपक्षप्रशंसकस्यानृतभाषितानि ॥७५॥

सद्भ्रूकुट्यौ कृतकलहयोरेतयोः कृष्णवर्णे
　　　क्रोधाज् जिह्मे, नयनयुगले रक्तिमानं दधाने ।
चित्रां श्रेणीमिव मधुलिहामुत्पलेष्वीक्षमाण-
　　　स्तत्रायातश्चकितचकितो धार्त्तराष्ट्रोऽतिखिन्नः ॥७६॥

तं तिग्मधामतनयं निजमातुलं च मद्राधिपं विनयवाग्विभवो विनीतः ।
बद्धाञ्जलि कुरुपति- कलहान्निवार्यस्वाभीष्टसाधनपरः स निनाय शान्तिम् ॥७७॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये एकोनविंशः सर्गः समाप्तः

—:०:—

## अथ विंशः सर्गः

शल्यः समुत्साहहतं व्यचेष्टत कर्णं विधातुं बलिनं परन्त्वसौ ।
स्वीयाद् व्यरंसीत्सुदृढान्न निश्चयाद्व्यूहं रणार्थं विरचय्य निर्ययौ ॥१॥

कल्पावसाने प्रलयार्थमुद्यतं तिग्मांशुधामानमिवापरं नृपः ।
संतिष्ठमानं परमाद्भुते रथे तं धर्मसूनुः सहसा व्यलोकत ॥ २ ॥

साकं वरेण्येन स शल्यभूभृता सारथ्यकर्मोद्धुतकीर्त्तिशालिना ।
प्रक्लृप्तवीरासनवेषदारुणं राजा तमालोक्य बभूव चिन्तितः ॥ ३ ॥

ऊचे स पार्श्वस्थमिदं धनञ्जयं पश्याङ्ग कर्णं पुरतः स्थितं रिपुम् ।
संग्राममिच्छुं सबलं सुसज्जितं मद्वचसः शङ्कुमिवातिदुःखदम् ॥ ४ ॥

अद्यैव ते तात परीक्षणात्मको वारश्चिराभ्यर्थित आगतोऽस्त्ययम् ।
एनं निहत्य प्रवरं धनुष्मतां स्वाम्यं ममाशूद्धृतकण्टकं कुरु ॥ ५ ॥

अस्मिञ्जिते वैरिणि वीरपुङ्गवे दुर्योधनाद्या निखिला महीभृतः ।
आयोधने येऽत्र समागता द्विषः संनिर्जिताः सन्ति महारथाः समे ॥ ६॥

मत्पक्षमालम्ब्य युयुत्सवो नृपाः साकं विपक्षैः स्वसमानपौरुषैः ।
कुर्वन्तु युद्धं रथिनो रथस्थितैः सर्वे स्वसाम्यं भजतोऽभियान्विह ॥ ७॥

त्वं कर्णमेनं ह्यभियाहि दुर्मदं युध्येऽहमाचार्यकृपेण साम्प्रतम् ।
भीमोऽपि दुर्योधनमेत्य युध्यतां निघ्नन्तु पाञ्चालनराश्च मद्रकान् ॥ ८ ॥

उक्त्वेत्यसौ चैकत आत्मसैनिकान् दुर्योधनः स्वीयबलानि चान्यतः ।
उत्साहयन्तौ धरणीं नभस्तलं संनादयामासतुरुग्रसंरवैः ॥ ९ ॥

वीराः पराजेतुमिह स्ववैरिणः पक्षद्वयस्यापि तृणाय मेनिरे ।
प्राणान्निजानस्त्रसमूहवर्षणैर्निन्युर्दिनं चापि निशासमानताम् ॥१०॥

छिन्तैनमेतं परिभिन्त सायकैर्गृह्णीत जीवन्तमिमं विपत्तगम् ।
स्त्रीयैः कृपायां कृपणैः कृपाणकैरेषां कुरुध्वं हि वपूंषि खण्डशः ॥११॥

हंहो इमे स्यन्दनचालका हता भग्ना रथा आयसनिर्मिता अपि ।
यूयं समेऽग्रेसरत द्विषद्बलं सम्मर्दयन्तो रथवाजिकुञ्जरैः ॥१२॥

पृष्ठानि नो दर्शय तस्वशत्रुभिः संग्राममध्यानयतान्तमुद्यताः ।
स्वर्गं मृता गच्छत वा जयश्रियमालिङ्ग्य शश्वत् परिमोदमाप्नुत ॥१३॥

इत्थं प्रवृद्धैर्ध्वजिनीमहारवैराशाः समस्ताः प्रतिदध्वनुस्तदा ।
माद्यद्रणोन्मादगृहीतचेतसः शूरा न कस्यापि वचः सुशुश्रुवुः ॥१४॥

अश्वद्विपस्यन्दनघोरनिःस्वना भीमं रणं हुङ्कृतयः प्रकुर्वताम् ।
कोदण्डघोषा व्यथितात्मनां रवा रन्ध्रेषु शूलं श्रवसां वितेनिरे ॥१५॥

कर्णं समालोक्य युधिष्ठिरः क्रुधा जाज्वल्यमानोऽतिजगर्ज दर्पितः ।
रे सूतपुत्राधमनीच कौरवा अत्याचरन् नस्तव पौरुषं श्रिताः ॥१६॥

आरेभिरे युद्धमिदं च भीषणं त्वद्बाहुवीर्याण्यवलम्ब्य निर्भयाः ।
त्वामद्य नूनं विनिपात्य संगरे राज्यार्थिनस्तान् विदधेऽफलानिह ॥१७॥

व्याहृत्य वाचं त्विति धर्मसूनुना नाराचराजिर्ववृषे समन्युना ।
कर्णोऽपि कर्णान्तलसद्धनुर्गुणो विव्याध मर्मस्थलमस्य सायकैः ॥१८॥

प्रावोचदेनं प्रविलज्जयन् पुनर्धर्माभिमानत्वमये परित्यज ।
आचार्यहन्तास्यनृतस्य भाषणाद् गन्तास्यवश्यं नरकान् सुदुःसहान् । १६

धिक् त्वां स्वराज्यार्थमसत्यवादिनं यः स्यन्दनस्ते स्पृशति स्म न क्षितिम् ।
संयाति सोऽयं धरणीमिमां स्पृशन् व्रीडां मनस्यानयसे न, युध्यसे ॥२०

न त्वां हनिष्यामि परन्तु संयुगस्यास्वादयिष्यामि सुखं मया सह ।
त्वं सावधानो भव, पापकर्मणामुग्रो विपाको भुवि भुज्यतामिह ॥२१॥

उक्त्वेति तस्योपरि बाणवर्षणं कर्णो व्यधत्तापरिमेयपौरुषः ।
कुन्तीसुतेनापि निजैर्महेषुभिः सूनुर्दिनेशस्य कृतोऽतिविह्वलः ॥२२॥

संमूर्च्छितः शल्यकृतोपचारतो भूयः स्वबोधं प्रतिपद्य सत्वरम् ।
बाणैः करालाद्धनुषो विनिर्गतैरुग्रैरजातारिमशातिमानयत् ॥२३॥

आसादिते निर्बलतां स पाण्डवे तत्स्यन्दनं चापि बभञ्ज सायकैः ।
सम्प्रद्रुत युद्धमपास्य भूपतिं संधर्त्तुकामस्तमनुप्रधावितः ॥२४॥

पाञ्चालवीराः प्रतिरोद्धुमाययुः कर्णं, परन्त्वम्बुनिधेर्महोर्मयः ।
शक्या निरोद्धुं न हि कोटिभिर्भटैः शूराग्रगण्यैरपि हस्तहेतिभिः ॥२५॥

क्षिप्रं प्रधावन् निगृहीतवानसौ धर्मात्मजं, तर्हि स मद्रभूपतिः ।
चिन्तां प्रपन्नो निजभागिनेयकं संरक्षितुं वाचमुवाच तं तदा ॥२६॥

सौते त्वया धर्त्तुमयं न शक्यते धर्मावतारः क्षितिपालभूषणः ।
संप्रेक्षणेनापि निजेन भस्मसात् कर्त्तुं स शक्नोति भवन्तमञ्जसा ॥२७॥

धर्मात्मजं पीडयितुं न चैहत सूर्यात्मजो व्रीडयितुं त्वियेष तम् ।
संलज्जित वीक्ष्य पृथासुतं स्वयं पर्यत्यजद् वीरवरो महात्मवान् ॥२८॥

तं प्राह—राजन्ननभिज्ञ एव भो संग्रामकार्येऽसि ततो बहिर्द्रुतम् ।
संयाहि सेवस्व तपोवने क्वचिद् धर्मं, महर्षीनतिथींश्च तर्पय ॥२९॥

आज्याक्तशुद्धैः सुसमिद्भिरन्वहं गव्यैः करीषैर्हुतभुक्समर्चनम् ।
विप्रार्चनं निर्जरविग्रहार्चनं त्वद्योग्यमेतं हि विभावये विधिम् ॥३०॥

स्वीयार्जवहेपितवारिजन्मना रम्याक्षमालाधृतियोग्यपाणिना ।
बाणं धनुस्तोमरशक्तिमुद्गरान् क्रूरं कृपाणं न विभर्त्तुमर्हसि ॥३१॥

धर्मात्मज त्वद्रुचिराननेन भो धर्म्यं वचो वर्णितमेव शोभते ।
घोराहवाह्वानमनन्तदुःखदं व्रीडास्पदं वीरजनैः प्रतीयते ॥३२॥

पद्भ्यां सुपर्वप्रतिमापरिक्रमा कार्यं भवद्योग्यमवैमि भूपते ।
निन्द्ये श्मशाने मृतदेहसंकुले यात्रा रथेनात्र न संगता तव ॥३३॥

शीघ्रं पलायस्व रणाजिरादितो नायाः पुनर्मादृशशूरसम्मुखम् ।
उक्त्वेति कर्णेन विमुक्तजीवनो राजा प्रदुद्राव स पाण्डवाग्रजः ॥३४॥

आलोक्य भीमस्तु महापराक्रमः कर्णेन संत्रासितमात्मबान्धवम् ।
अन्यैश्च युद्धं परिहृत्य सत्वरमभ्यर्णमेतस्य स योद्धुमाययौ ॥३५॥

भ्राजत्करेणुप्रतिमां जयश्रियं संप्राप्तुकामौ बलशालिनावुभौ ।
घोराहवं चक्रतुरिद्धकोपनौ तौ भीमकर्णाविभगजौ गजाविव ॥३६॥

तत्राशु वीरो नकुलः समागमत् स्वीयाग्रजस्यास्य सहायताकृते ।
देवः सहादिश्च ततश्च संगतो भूयोऽप्युपाढौकत धर्मराडपि ॥३७॥

तिग्मांशुसूनुः सकलैरयुध्यत तैः सार्द्धमेकः प्रथितो महाबलः ।
नाशक्नुवंस्तेऽस्य पुरः प्रसर्पितुं नागा मृगेन्द्रस्य यथा बलीयसः ॥३८॥

कुन्त्यै प्रदत्तं वचनं स संस्मरंस्तान्नावधीत् स्तुत्यवचःपराक्रमः ।
अध्यात्मशस्त्रास्त्रवरेण्यकौशलं सन्दर्शयामास महारणाङ्गणे ॥३९॥

संचूर्णयामास रथांश्च सारथीन् सम्प्रेषयामास कृतान्तसद्मनि ।
सम्पातयामास तुरङ्गमांस्तथा तेषाञ्चकाराशु धनूंषि खण्डशः ॥४०॥

वज्रायितैः स्वीयधनुर्विनिर्गतैर्नाराचसंघैश्चतुरोऽपि पाण्डवान् ।
संछादयामास दिनेशनन्दनः शल्यस्तदा ग्लानिमवाप्तवान् पराम् ॥४१॥

चिन्तातुरः कर्णमुवाच मद्रराड् राधेय धुर्य्योऽसि धनुष्मतामिह ।
वध्या न पाण्डोस्तनया इमे त्वया शौर्यं महत्स्वेव करोति यो महान् ॥४२

पश्यैष वीरप्रवरो धनञ्जयः श्वेताश्वसंयुक्तरथे विराजितः ।
श्रीकृष्णनेत्रा सह सोऽद्य संगरे योद्धव्य आस्ते पुरतो ह्यवस्थितः ॥४३॥

चेदोजसस्तेऽत्र भवेद्पव्ययस्तीक्ष्णांशुगानामपि संहतिह्र्सेत् ।
संयत्यवश्यं हि तदाऽर्जुनेन ते संभाव्यतेऽनर्थकरः पराभवः ॥४४॥

धर्मात्मजादींश्चतुरोऽपि निघ्नतः कार्यं न ते किंचिदपि प्रसिध्यति ।
दुर्योधनः स्यान्न च सिद्धकामनः कीर्त्तिस्त्वदीयापि भवेन्न विश्रुता ॥४५॥

संबोधितस्तेन निजां प्रतिश्रुतिं सस्मृत्य चैतान् विरहय्य जीवितान् ।
अन्यत्र संग्रामचिकीर्षया गतो विस्मापयन् वैरिजनान् स सस्मितम् ॥४६

चक्रुस्तदा ते सहसा पलायनं संगोपयन्तः परमप्रियानसून् ।
आलोक्य चैतान् रणतः पराङ्मुखांस्तत्सैनिकाश्चापि भयात् प्रदुद्रुवुः४७

सेनाधिपास्तान् रुरुधुः पलायितांस्तान् धर्मराजस्य भयार्त्तसैनिकान् ।
अन्यत्र कर्णं प्रविलोक्य निर्गतं ते युद्धभूमौ पुनरप्यवातरन् ॥४८॥

अत्यन्तशोच्या नृपतेरभूद्दशा क्रूरेण कर्णेन कृताऽद्य संगरे ।
भित्त्वा हृदस्त्राणमनेकसायकाः संतस्थिरे मर्मणि तस्य कोमले ॥४९॥

जज्ञन्यते स्मास्य महाव्यथा तनौ सम्माननाशेन पराजयेन च ।
संव्रीडितः साहसशून्यतां गतो नैराश्यमासादितवान् निजे जये ॥५०॥

क्षेत्रं रणस्य प्रविहाय सत्वरम् औदास्यभावं गमितेन चेतसा ।
विश्रान्तिमिच्छुः शिविरं समाश्रयन्नध्यास्त पर्यङ्कतलं स कोमलम् ॥५१॥

अङ्गेषु चैतस्य निसक्तसायका निःसारिताः शल्यचिकित्सकैर्द्रुतम् ।
सान्धानिकैश्चापि विशल्यकारिभिर्निन्ये स नैरुज्यमरं सदौषधैः ॥५२॥

किन्त्वस्य तीक्ष्णा अवमानवाक्छराः कर्णप्रयुक्ता न्यविशन्त मर्मसु ।
तैः पीड्यमानोऽसहनीयदुःखदैर्नासावशान्तो लभते स्म निर्वृतिम् ॥५३॥

यद्यप्यमुष्य ह्रसति स्म वेदना शारीरिकी किन्तु न मानसी व्यथा ।
सा वर्धते स्म प्रबला क्षणे क्षणे शल्यायिता कर्णनिकारसम्भवा ॥५४॥

पार्श्वस्थितौ तौ नकुलः सहादिको देवश्च भीमेन रणाङ्गणे तदा ।
संप्रेषितौ तेन विषण्णचेतसा स्वभ्रातृसाहाय्यकृते दयालुना ॥५५॥

नावेक्ष्य युद्धे नृपतिं युधिष्ठिरं चिन्तां प्रपेदे महतीं धनञ्जयः ।
दुःस्वास्थ्यमेतस्य निशम्य भीमतोऽभ्यर्णं प्रतस्थे सह माधवेन सः ॥५६॥

बन्धुं निरैक्षिष्ट सुतल्पमास्थितं शुष्यन्मुखं रक्तचयाचिताङ्गकम् ।
दीर्घं श्वसन्तं भयचिन्तयाऽऽतुरं प्राप्तव्यथामुद्रितनेत्रपङ्कजम् ॥५७॥

द्वावेत्य संपस्पृशतुः पदाम्बुजं कृष्णार्जुनौ धर्मसुतस्य धीमतः ।
आश्वासयामास कपिध्वजो भृशं जिज्ञासितं चापि शमस्य भूमृतः ॥५८

ऊचे तथा युद्धमपास्य साम्प्रतं कृष्णः सखाऽहं च दिदृक्षयाऽऽगतौ ।
उन्मील्य नेत्रे हतशोकसन्ततिस्तूर्णं निरीक्षस्व दयालुमानसा ॥५९॥

आश्वस्तचेता भव, कापि मानसे चिन्ता विधेया न धरापते त्वया ।
श्रीवासुदेवे सति कोऽपि किं रिपुः स्थातुं समर्थः प्रबलोऽपि भूतले ॥६०

विक्रान्तवीरस्य विचारयन् मृतिं हर्षप्रकर्षं स जगाम भूपतिः ।
कर्णं निहत्यैष समागतोऽधुना कृष्णस्य साहाय्यत इत्यमन्यत ॥६१॥

पीयूषनिस्यन्दि वचो निपीय तद् विस्मृत्य दुःखान्युपविश्य सत्वरम् ।
उन्मीलिताक्षोद्गतरोमसन्तती राजा प्रसीदन् गिरमित्यवोचत ॥६२॥

मित्रेण साकं वसुदेवसूनुना सुस्वागतं वच्मि कपिध्वजस्य ते ।
दृष्ट्वा युवामासजयौ मनोव्यथा देहव्यथा चापि विनाशमाप्नुतः ॥६३॥

द्रोणस्य वा भीष्मपितामहस्य वा चिन्ता मनागप्यभवन्न मे हृदि ।
नाम्नैव कर्णस्य दुराप्यपांनिधिः कूलं विभिद्याशु सदा समैधत ॥६४॥

भीत्या महत्या वसुषेणजन्यया पर्याप्तमन्नस्य जलस्य सेवनम् ।
नानुष्ठितं द्वादशहायन मया निद्रासुखं वापि च नान्वभूयत ॥६५॥

आसीद् यमोऽसौ विकरालविग्रहः संहर्तुकामः परिपन्थिमानवान् ।
देवैः समस्तैः सह लोकपालकैरिन्द्रोऽपि तं जेतुमलं न संगरे ॥६६॥

देहो मदीयस्तितऊपमानतां वेभिद्यमानो गत एतदाशुगैः ।
मामद्य जीवन्तमसौ समत्यजत् तस्यानुकम्पां महतीं विभावये ॥६७॥

हंहो शरीरी किमसौ पराक्रमो वीरो रसो वा किमु विग्रहं श्रितः ।
अद्यापि मे तस्य भयङ्कराकृतिर्नृत्यत्यजस्रं किल नेत्रसन्निधौ ॥६८॥

आक्षेपवाचा तु पितामहोक्तया दिग्वासरानस्त्रमुपाददे न सः ।
रात्रिन्दिवं तस्य तदापि विग्रहः संराजते स्म प्रवरोऽत्र विग्रहे ।६९॥

अश्नन् पिबन् हन्त चलन् स्वपंस्तथा सर्वत्र कर्णं हि सदा निरैक्षिषि ।
संग्रामभूमौ स यदा ह्यवातरद् यान्ति स्म नैवास्य पुरो महारथाः ॥७०॥

आकर्ण्य सैंहीं समरेऽस्य गर्जनां रोमाण्युदश्वन् हि युधिष्ठिरस्य मे ।
मामभ्युपेतः स रणे पुनः पुनर्ब्रूते स्म हत्वा बहु कुत्सितं वचः ।७१॥

श्रुत्वाऽस्य दुर्वाक्यमहं समुच्छ्वसन् प्राप्तोऽस्म्यवश्यं मृतकस्य तुल्यताम् ।
आरक्षि शल्येन निजा प्रतिश्रुतिस्तस्योपदेशाद् रिपुणाऽस्म्युपेक्षितः॥७२

लोकेऽत्र यद्यप्यसकौ न विद्यते किन्त्वेष मद् दृष्टिपथे विराजते ।
तत्तुल्यवीरो न मया विलोकितो ह्यद्यापि सर्वत्र स एव भासते ।७३॥

श्रीवासुदेवस्य सहायतामृते तं स्याः कदाचिन्न निहन्तुमीश्वरः ।
युद्धे हतोऽसावथवा ममास्ति किं भ्रान्तिः, किमेतर्ह्यरिरङ्ग जीवति ।७४

उन्मादजं वा पवमानहेतुकं व्याधिं प्रपन्नो लपतीह मानुषः ।
तथैव जल्पन् नृपतिर्निरर्गलं श्रान्तः स भूयोऽप्यधितल्पमस्वपत् ॥७५॥

आकर्ण्य वाचं नृपतेर्धनञ्जयः प्राह स्म– राजन् वितथं न ते वचः ।
राधेयकर्णः स महापराक्रमी लोकत्रये नास्ति हि तादृशो बली ॥७६॥

आसीद् यमोऽसौ विकरालविग्रहः संहर्तुकामः परिपन्थिमानवान् ।
देवैः समस्तैः सह लोकपालकैरिन्द्रोऽपि तं जेतुमलं न संगरे ॥६६॥

देहो मदीयस्तिततऊपमानतां वेभिद्यमानो गत एतदाशुगैः ।
मामद्य जीवन्तमसौ समत्यजत् तस्यानुकम्पां महतीं विभावये ॥६७॥

हंहो शरीरी किमसौ पराक्रमो वीरो रसो वा किमु विग्रहं श्रितः ।
अद्यापि मे तस्य भयङ्कराकृतिर्नृत्यत्यजस्रं किल नेत्रसन्निधौ ॥६८॥

आक्षेपवाचा तु पितामहोक्तया दिग्वासरानस्त्रमुपाददे न सः ।
रात्रिन्दिवं तस्य तदापि विग्रहः संराजते स्म प्रवरोऽत्र विग्रहे ।६९॥

अश्नन् पिबन् हन्त चलन् स्वपंस्तथा सर्वत्र कर्णं हि सदा निरैक्षिषि ।
संग्रामभूमौ स यदा ह्यवातरद् यान्ति स्म नैवास्य पुरो महारथाः ॥७०॥

आकर्ण्य सैंहीं समरेऽस्य गर्जनां रोमाण्युदञ्चन् हि युधिष्ठिरस्य मे ।
मामभ्युपेतः स रणे पुनः पुनर्ब्रूते स्म हत्वा बहु कुत्सितं वचः । ७१॥

श्रुत्वाऽस्य दुर्वाक्यमहं समुच्छ्वसन् प्राप्तोऽस्म्यवश्यं मृतकस्य तुल्यताम् ।
आरक्षि शल्येन निजा प्रतिश्रुतिस्तस्योपदेशाद् रिपुणाऽस्म्युपेक्षितः॥७२

लोकेऽत्र यद्यप्यसकौ न विद्यते किन्त्वेष मद्दृष्टिपथे विराजते ।
तत्तुल्यवीरो न मया विलोकितो ह्यद्यापि सर्वत्र स एव भासते । ७३॥

श्रीवासुदेवस्य सहायतामृते तं स्याः कदाचिन्न निहन्तुमीश्वरः ।
युद्धे हतोऽसावथवा ममास्ति किं भ्रान्तिः, किमेतर्ह्यरिरङ्ग जीवति ।७४

उन्मादजं वा पवमानहेतुकं व्याधिं प्रपन्नो लपतीह मानुषः ।
तथैव जल्पन् नृपतिर्निरर्गलं श्रान्तः स भूयोऽप्यधितल्पमस्वपत् ॥७५॥

आकर्ण्य वाचं नृपतेर्धनञ्जयः प्राह स्म— राजन् वितथं न ते वचः ।
राधेयकर्णः स महापराक्रमी लोकत्रये नास्ति हि तादृशो बली ॥७६॥

वीरोऽस्मदीयेषु न सैनिकेषु यस्तन्नामतो भीतिमुपैति नात्मनि ।
दृष्ट्वैव तं हन्त रणे समागतं दूरेऽपसर्पन्ति महारथा अपि ॥७७॥

श्रान्तिं न संयाति कदापि संगरे कृन्तन् रिपून् गृञ्जनमूलकोपमान् ।
अग्रेसरत्येव यथोन्मदः करी स्वं पृष्ठदेशं न च दर्शयत्यसौ ॥७८॥

संख्यामतीतान् नृपतीन् महारथान् विख्यातवीरान् रणपण्डितानसौ ।
द्रोणात्मजस्यानुमतोऽद्य वैरिणः सम्प्रेषयामास यमस्य सद्मनि ॥७९॥

वर्षाण्यसीदाम चतुर्दश प्रभो यस्यानुमत्या विवशा वनान्तरे ।
यः संसदि प्राह सुदुर्वचं वचः कृष्णां कुलीनां द्रुपदात्मजां वधूम् ॥८०॥

एकाकिनं शस्त्रविहीनमात्मजं क्रूरोऽनुकम्पारहितो रणाङ्गणे ।
सौभद्रमूनं वत षोडशाब्दतो व्यापदयामास महारथैश्च यः ॥८१॥

स्पर्द्धां दधन्मामधिलोकसम्मुखं जेतुं रणे यस्य समीहितं सदा ।
दुर्योधनं तोषयितुं सदैव यो वादानवाच्यान् प्रयुयुञ्ज नः प्रति ॥८२॥

वर्णाधमो गर्हितसूतवंशजो राधेय एतर्ह्यपि नास्त्यसौ मृतः ।
आशीर्वचोऽवाप्य तवाद्य संगरे कृष्णप्रभावात् स हनिष्यते ध्रुवम् ॥८३॥

सम्पीडयामास भवन्तमद्य यो धर्मावतारं च जगाद दुर्वचः ।
गत्वा रणे तं विनिपातयाम्यहं सम्प्रत्यनुज्ञा भवता प्रदीयताम् ॥८४॥

अवेत्य युधि जीवितं ह्यधिरथस्य तस्यात्मज
पुनः स समलोकयन् सकलमेव शून्यं जगत् ।
न्यमज्जदतिदुर्गमे द्रुतमशातिवारान्निधौ
जगच्च निखिलं तमस्ततिभृतं नृपोऽमन्यत ॥८५॥

इति श्रीकविवर्य-विन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये विंशः सर्गः समाप्तः

—:०:—

# अथैकविंशः सर्गः

अथ नृपतिरुदस्थात् क्रोधताम्राननश्रीः
कुटिलभृकुटियुक्तो दन्तनिष्पीडितौष्ठः ।
इव वपुषि समन्ताद् विद्युदापूर्यमाणो
वचनमिदमवोचन्नन्दसूनोः सखायम् ॥ १ ॥

अयि बत कपिकेतो कर्णमेनं निहन्तुं
प्रबलनिजविपक्षस्यैकमात्रावलम्बम् ।
समरभुवि कृतास्तेऽनेकधा ते प्रतिज्ञा
मनसि विमृश नैजे सा न वैयर्थ्यमागात् ॥२॥

सुविदितमभविष्यद् दुष्टदुर्योधनस्य
प्रधनवरसहायं सर्वशूराग्रगण्यम् ।
न हि सति समरे त्वां संविजेतुं समर्थ-
स्तदहमिह वनान्तान्नैव हन्तागमिष्यम् ॥३॥

बहुविधमपमानक्लेशमब्दं सहित्वा
नृपतिवरविराटस्यालये गुप्तवेषः ।
परदकवलजीवी सारमेयोपमानो
निकृतिशतमुपेत्याहं मुधा किं न्यवत्स्यम् ॥४॥

निजगिरमनुधावन्नर्कवर्षाण्युषित्वा
वनजजननिषेव्ये घोरकान्तारदेशे ।
प्रकटितनिजदेहो गुप्तवासान्तराले
पुनरपि विपिनेऽहं द्वादशाब्दानयास्यम् ॥५॥

क्रममिति वत वारं वारमत्रानुसृत्या-
खिलमपि निजमायुः कानने यापयित्वा ।
अगणिततनुपातं सत्तपांसि प्रकुर्वन्
मुनिरिव फलमूलान्याहरिष्यं सदैव ॥६॥

मनुजपतिवरेण्यान् मत्स्यपाञ्चालदेश्यान्
अपरनृपतिवर्य्यान् कोटिशो वीरधुर्य्यान् ।
इह हि समरभूमौ स्वीयसाहाय्यहेतोः
कथमपि बहुमान्यान् नाहमामन्त्रयिष्यम् ॥७॥

अधिरथसुतवीर्यान्न्यक्कृताशेषधैर्या-
दनुभवति मनो मे पुर्वतो भीतिमुग्राम् ।
न हि तव मुखनिर्य्यच्छौर्यमाकर्णयिष्यं
रणमिममहमज्ञो नाचरिष्यं कदापि ॥८॥

प्रथितकुरुकुलोद्यद्धूम्रकेतोः सहायं
कपटविकृतबुद्धेर्धार्त्तराष्ट्रस्य कर्णम्
मम मतिरियमासीद् घातयिष्यत्यवश्य-
ममरपतितनूजः सा समूलं हताऽभूत् ॥९॥

अपमितिमनुतिष्ठन् युद्धभूमाविदानीं
प्रतिहतमनसो मे भूयसीं तामसह्याम् ।
सदयहृदय एषोऽसुप्रदानं विधाय
जनमिममजहात् तन्मृत्युतो नातिरिक्तम् ॥१०॥

निकृतिमरिकृतां तां भीषणां चापि सोढ्वा-
ऽत्यजमहमिह नास्रन् यन्मदीयोऽनुजन्मा ।

समरशिरसि हत्वा मामकीनं सपत्नं
मम मनसि निषक्तं शल्यमुद्धर्तुमीशः ॥११॥

अधिरथतनुजाताद् भीतिमन्तर्दधानः
पवनसुतमिहैकं त्वां परित्यज्य युद्धे ।
इह गमनमकार्षीरद्य नूनं सबन्धु-
र्मम कुशलमिषेण स्वासुसंरक्षणार्थी ॥१२॥

जगति विहितपूर्वां यः स्वकीयां प्रतिज्ञा-
मवति न हि जनो यः सोऽस्त्यनार्योऽतिनिन्द्यः ।
जननमपि तदीयं व्यर्थमुच्चार एव
भवति निजजनन्याः सर्वदोपेक्षणीयः ॥१३॥

अहह तव समक्षं यो विनाशं विधत्ते
स्वसभयपृतनायाः सैनिकानामजस्रम् ।
द्रुम इव परिशुष्कस्त्वं च सन्तिष्ठमानो
न च तमयि निरुन्धेश्चेत्तवास्ते कलङ्कः ॥१४॥

अधिजलनिधि नीत्वा कर्णधारायमाणः
समरतरणिमेतां संपरित्यक्तवांस्त्वम् ।
अनुभवति न सौख्यं घट्टके वा गृहे वा
रजकनिलयवासी सारमेयस्तपस्वी ॥१५॥

परिचितिरभविष्यत् त्वं पुमान् नासि, नाहं
कथमपि रणचर्यां शोकदामाचरिष्यम् ।
विगतविजयमोहस्त्यक्तराज्यप्रलोभः
स्वमुखमपि जनेभ्योऽदर्शयिष्यं न चैव ॥१६॥

विततवरभुजौ ते व्यर्थनिर्जीवशुष्यद्-
द्रुमविलसितशाखातुल्यतां सन्दधानौ ।
भुवनविजयि चैतद् गाण्डिवं सुप्रसिद्धं
क्षयरहितनिषङ्गं चापि धत्से मुधैव ॥१७॥

तव धिगमितमोजो गाण्डिवं ते धिगस्तु
विलसति यदरिक्तं धिक् च तूणीरमेतत ।
हविरदनवितीर्णं स्यन्दनं ते च धिग्धिक्
सुहृदमपि च धिक् त्वां देवकीनन्दनस्य ॥१८॥

इति वचनमुदश्वन् धर्मराजो विमोहं
व्यगमदतिशयार्त्तोऽशिश्रियत् स्वीयशय्याम् ।
वसनपिहितवक्त्रस्त्यक्तधैर्यस्तदानीं
शिशुरिव स समुच्चैरुच्छ्वसन् संरुरोद ॥१९॥

जनकसमगरीयोभ्रातुरत्यादरं हि
सततमपि विधत्ते संविनीतोऽर्जुनोऽयम् ।
उचितमनुचितं वा तद्वचः सर्वदैवा-
ऽसहत मुदितचित्तः साधुकर्माऽनुजन्मा ॥२०॥

परमिह विहिताऽऽसीत् तेन पूर्वं प्रतिज्ञा
यदि मम धनुषो ना कोऽपि गाण्डीवनाम्नः ।
अधिभुवनमनर्हं निन्दन चेद् विदध्यात्
सपदि मम कृपाणः कर्त्तयेत्तस्य शीर्षम् ॥२१॥

परनिजगणनाऽऽस्ते नैव हन्त प्रतिज्ञा-
समवनवरकृत्ये वीरधौरेयपुंसाम् ।

निजवचनसुरक्षाकार्यहेतोरनेके
प्रियतमसुतदारानत्यजन् सत्यकामाः ॥२२॥

समभजदत एव ह्यर्जुनः क्रोधमिद्धं
महितमहिमबन्धोर्मस्तकं चेत्तुमिच्छन् ।
निशितनिजकृपाणं कर्षयन् कोषतोऽसौ
त्वरितमुपगतोऽभूदग्रतोऽजातशत्रोः ॥२३॥

अभिमतमवगच्छन् वासुदेवोऽर्जुनस्य
गिरमतिशयरम्यां व्याहरन्नज्ञतुल्यः ।
सुहृदमिममपृच्छद् भो भवान् खड्गमेतं
समुदधरदकाले तद्रहस्यं न जाने ॥२४॥

रणरणनमपीदं विद्यतेऽत्यन्तदूरं
कुरुनृपतितनूजा अत्र नागन्तुमर्हाः
अधिरथतनुजन्माऽपीह नायाति कश्चिद्
रिपुरपि तव सम्प्रत्यस्ति नैवात्र दृष्टः ॥२५॥

द्विषदहितकृदेष क्रूरकर्मा कृपाण
इह कथमिव कोषादुद्धृतोऽभूत् त्वयेति ।
समुचितमभिधातुं चेद् भवेन्मत्समक्षं
सपदि कथय साधो विद्धि मां नात्मभिन्नम् ॥२६॥

अचरचरपतेः सद्भाषितं तन्निशम्य
सुरपतितनुजन्मा सैष गाण्डीवधन्वा ।
अवददयि सुहृत्तेऽवाच्यमास्ते न किञ्चित्
त्वमसि हि मदभिन्नो गोपनीयं न तेऽस्ति ॥२७॥

परममहिमबन्धो श्रूयतां भो कदाचित्
तव चरणशरण्योऽहं प्रतिज्ञामकार्षम् ।
यदि मनुजनिरिह कश्चिद् गाण्डिवं मे विनिन्देत्
तदहमचिरमेतं संहनिष्यामवश्यम् ॥२८॥

पितृसमबहुमान्योऽयं सतामग्रगण्यः
शुभचरणवरेण्यो मत्कसर्वस्वभूतः ।
स इह धनुरनिन्दन्मामकं साम्प्रतं यत्
तदहमनृतभीतो धर्मसूनुं निहन्मि ॥२९॥

प्रथममहमिदानीमेनमाहत्य पश्चात्
प्रबलतममरिं तं सूतपुत्रं हनिष्ये
सुहृदयि विषयेऽस्मिन् किन्तु धर्मानुकूलं
तव मतमिति वेत्तुं प्रार्थये त्वां प्रपन्नः ॥३०॥

वच इति सुनिशम्य स्वीयभक्तार्जुनस्य
प्रणतहितकृदात्मा सत्यदर्शी परात्मा ।
अहसदतिमनोज्ञं तत्परं वाक्यमूचे
सुदृढतरमिदं तं शिष्यभूतं सखायम् ॥३१॥

अवगतमिदमासीद् बुद्धिमान् नीत्यभिज्ञ-
स्त्वमसि परमिदनीं बुध्यसेऽबोधबालः ।
श्रुतिगदितरहस्यं धर्ममर्म प्रकृष्टं
न हि तव विदितं भो त्वद्वचो व्यर्थमेतत् ॥३२॥

सुविदितपरमार्थाः सत्यकामा अलुब्धाः
कथितवचनमात्रां मेनिरे न प्रतिज्ञाम् ।

परिणतिरिह यस्याः सद्गतेः साध्यभूता
स्वजनहितविधात्री सा प्रतिज्ञा प्रतिज्ञा ॥३३॥

क्वचिदपि परिणामेऽधर्मकर्मापि धर्मः
क्वचिदपि भुवि धर्मोऽधर्मरूपं विभर्त्ति ।
अत इह विबुधानां संहतिर्वर्णमात्रां
प्रतिहतसदुदर्कां मन्यते न प्रतिज्ञाम् ॥३४॥

विबुधजननिषेवी नैजमिथ्याप्रतिज्ञा-
परवशमुपयातो हन्तुकामस्त्वमेनम् ।
जनकमिव वरेण्यं सत्यमूर्त्तिं श्रुतिज्ञं
कथय वत ततोऽन्यत् पातकं किञ्चिदास्ते ॥३५॥

कुटिलहृदयतो वा क्रौर्यतो द्वेषतो वा
मनसि विकृतभावं संदधानो रिपुर्यः ।
धनुरिदमतिरम्यं गाण्डिवं चेद् विनिन्देत्
स भवति वधयोग्यस्त्वत्प्रतिज्ञाशयोऽयम् ॥३६॥

सततमृतपरो यो धर्मशीलो दयावान्
हितरिपुसमभावः सर्वदा ते हितैषी ।
अधिरथजजितः संस्तत्कृताच्चापमानाद्
वचनमिदमवोचन्नात्र गाण्डीवनिन्दा ॥३७॥

अवदधदयमास्ते त्वां विना नैव कर्ण-
मिह हि जगति कश्चिद्धन्तुमीशो मनुष्यः ।
त्वदहितमतिदुःखात् तावकोत्तेजनार्थ-
मलपदयमजानंस्ते पुराणीं प्रतिज्ञाम् ।।३८॥

यद्‌पि ऋतमदो वै किन्तु नैजं वचोऽपि
भवति हि परिपाल्यं सत्यपालेन पुंसा ।
कथितमृतवरेण्यैः श्रौतविज्ञानविद्‌भिः
कटुकवचनमुक्तं घाततुल्यं गुरूणाम् ॥३९॥

अत इममतिपूज्यं धर्मराजं नृनाथं
त्वमिति कथय मान्यं मानहीनां कटूक्तिम् ।
जगति महितपुंसामुक्तशब्दापमानो
मरणसदृश आस्ते शास्त्रनिष्कर्ष एषः ॥४०॥

तदपमतिकृते त्वं तत्पदाब्जं प्रपद्य
निजकृतमपराधं क्षामयेर्म्लानचेताः ।
अतिगहनगतिं तां सोऽपि धर्मस्य जानन्
हृदयविनयभाजस्तेऽपराधं क्षमेत ॥४१॥

गगनगपतिकेतोर्भाषितं शास्त्रसिद्ध-
मवदधदधिचित्तं विज्ञवर्योऽर्जुनोऽयम् ।
गुरुसमबहुमान्यं भ्रातरं धर्मसूनुं
निकृतिनिरतवाचं वक्तुमारब्धवांस्ताम् ॥४२॥

अयि नृप कटुवाक्यं मां वृथा त्वं न्यगादी-
र्न हि निजकृतमंहः पश्यति भ्रान्तचेताः ।
अपरशरणसंस्थं नाशयत्यन्धकारं
स्वतलविलसितं तं हन्ति नैव प्रदीपः ॥४३॥

व्यरचयदिह धाता द्रष्टुमीशानि खानि
निजपुरत उदञ्चद्वस्तुजातानि सत्यम् ।

निभृतनयनयुग्मः कोऽपि विज्ञाग्रगण्यो
निजहृदयनिविष्टं वीक्षते दोषराशिम् ॥४४॥

अतिशयमवगीतान् वेदविद्भिर्दुरर्चा-
स्त्वमधम परिदीव्यन् राज्यमात्मानमस्मान् ।
द्रुपदनृपतिपुत्रीं द्रौपदीं चापि साध्वीं
महति बत दुरन्तेऽमज्जयः क्लेशसिन्धौ ॥४५॥

निजकुलवरवध्वास्त्वं निकारस्य हेतु-
स्त्वमसि च कुलघाती द्यूतसंसक्तचेताः ।
त्वदधिगतनिदेशात् स्वीयसर्वस्वनाशो
विहित इह तथापि त्वं विनिन्दस्यनिन्द्यम् ॥४६॥

हितवितथविचारस्त्वं सदाचारहीन
उपकृतिमपि न त्वं मन्यसे गर्हितात्मा ।
प्रभवितुमचलायास्त्वं न नाथोऽसि योग्यो-
ऽधिभुवनमुदासीः क्षत्रियाणां कलङ्कः ॥४७॥

इति विविधमयोग्यं दुर्वचो भाषमाणो
गलितनयननीरो लज्जयाऽऽकृष्टखड्गः ।
नृपकृतमपमानं संस्मरन् संविषीद-
न्नमरपतितनूजो हन्तुमात्मानमैच्छत् ॥४८॥

अथ पुनरयमूचे देवकीनन्दनेन
कथमयि कुरुषे त्वं कार्यमज्ञस्य भूयः ।
गुरुकृतनिकृतेश्चेदात्मघाते प्रवृत्त-
स्तदसिकृतवधान्ते ब्रूहि किं त्वं विदध्याः ॥४९॥

शृणु निजमुखतश्चेदात्मनः शंसनं य-
दभिदधति बुधास्तच्चात्महत्यासमानम् ।
पुरत उपगतः सन् भ्रातृवर्य्यस्य चास्य
प्रकुरु निजमहत्त्वाशंसनं तद्वधस्ते ॥५०॥

मतमिदमवधार्य श्रीधवस्यार्जुनोऽयं
प्रियतरमुपदिष्टं पालयन् व्याजहार ।
अयि नृपवर किं मां बुध्यसेऽहं किलैकः
सफलतरमकार्षं राजसूयं क्रतुं ते ॥५१॥

विजयमपि जगत्याः संव्यधामेककोऽहं
पुरि नृपतिविराटस्याखिलान् कौरवांश्च ।
गुरुवरसहितांस्तान् भीष्मकर्णादियुक्ता-
नधिसमरमथैकः संनिरास्थं सपत्नान् ॥५२॥

सुरपुरमधि गच्छन् दानवाग्र्यान् निवात-
कवचसमभिधानान् भीतनाकाधिपेन्द्रान् ।
अहमचिरमनायासेन तान् संनिपात्य
त्रिदशपुरवरेण्यैरस्मि संगीतकीर्त्तिः ॥५३॥

क्षितिपतिमपि सद्यो भिक्षुकं कर्त्तुमर्हो
हतविधिमपि भिक्षुं शक्त ईशं विधातुम् ।
अतुलितपुरुषार्थं पश्य राजन् मदीयं
प्रबलतमविपक्षं कर्णमद्यैव हन्मि ।५४॥

अधिरथजनुषश्चेल्लोकपालाः समस्ता
अवनमिह विधातुं संहताः सम्भवेयुः ।

तदपि समरभूमावागतं सूतसुनुं
यमनसदनसंस्थं संविधास्येऽद्य नूनम् ॥५५॥

गिरमिति समुदीर्य ह्यर्जुने याति मौनं
प्रकृतिमधिगतः सन् रोरुदावान् नरेन्द्रः ।

व्यलपदनुज सत्यं मत्समः कोऽस्त्यधन्यो
जगति परमपापः क्रूरकर्मा नृशंसः ॥५६॥

अनुसरणपरा मे भ्रातरो यूयमेते
प्रतिवनमघशून्या हन्त बम्भ्रम्यमाणाः ।

अधिकदशमिताब्दान् दुःखदग्धा मयैव
न्यवसत सह सर्वे मामहो सेवमानाः ॥५७॥

नृपतिवरतनूजै राजवंश्यैर्भवद्भि-
र्निजकुलविपरीतां भैक्ष्यचर्यां चरद्भिः ।

अगणितनरगेहान् नित्यमाटाद्यमानै-
स्तृणमिव निजदुःखं मत्प्रसादाय मेने ॥५८॥

अहह सदसि नग्ना क्लेशसिन्धौ निमग्ना
ह्युभयकुलवरेण्या द्रौपदी स्वैरिणीति ।

यदतिकुटिलचित्तैरभ्यधायि प्रकाश-
मयमहमिह हेतुः पापकर्माऽधमोऽस्मि ॥५९॥

अधिगतरणशिक्षो मान्य आचार्यवर्यो
भरतकुलनृसिंहो भीष्मदेवोऽपि वन्द्यः ।

अनृतकपटरीत्या राज्यलोभाद् घृणार्हाद्
यमसदननिषेव्यौ तौ मयाऽकारिषाताम् ॥६०॥

भवितुमहमयोग्यो भूतलस्यास्मि शास्ता
कुरुनृपतितनूजान् कर्णमन्यांश्च शत्रून् ।
इह युधि विनिपात्य स्वाग्रजो भीमसेनः
सकलभुवनवन्द्ये राज्यपीठेऽभिषेच्यः ॥६१॥

अभिदधदिति राजा हन्त रोरुद्यमानो
विरहितशयनीयोऽसौ तपस्तप्तुकामः ।
क्वचिदपि सुविविक्तेऽरण्यदेशे यियासु-
रुदचलदिति दृष्ट्वा हन्त सर्वे व्यसीदन् ॥६२॥

वनगमनपरं तं वासुदेवोऽनुधावन्
विनयविनतभालस्तत्पदाब्जे विलुण्ठन् ।
सकरुणहृदयः स्वं दैन्यभावं दधानो
न्यवददयि दयालो नार्जुनस्यापराधः ॥६३॥

अनुमतिमनुसृत्य प्रेरणां चास्मदीयां
त्वदनुजवरेण्यो गाण्डिवं विभ्रदेषः ।
अनभिमतमनेकं प्रोक्तवान् दुर्वचस्ते
स ननु मदपराधो मर्षणीयस्त्वयाऽद्य ॥६४॥

विवशमतिक आसीत् स प्रतिज्ञाप्रपूर्त्तौ
तदिदमिह विदित्वा तं भवान् क्षन्तुमर्हेत् ।
इह च मयि च सद्यः संप्रसन्नान्तरात्मा
भवतु वदतु राशीन् भूयसः स्वाशिषाञ्च ॥६५॥

तदनु मघवसूनुर्माधवस्येङ्गितज्ञो
नृपतिचरणयोः स्वं मात्रमारोप्य भक्त्या ।

निजकृतमपराधं क्षामयन् संययाचे-
ऽधिरथसुतवधार्थं भ्रातुराशीर्वचांसि ॥६६॥

सपदि गलितमोहोऽजातशत्रुः प्रसीदन्
निजमनुजनिमेनं सर्वदा वश्यभूतम् ।
चरणमधिशयानं तूर्णमुत्थाप्य दोर्भ्यां
सदयहृदयदेशे पीडयन् सौख्यमापत् ॥६७॥

उभयसहजयोः संदृष्टसत्प्रीतिभावो
मिल प्सुरवैरी धर्मरक्षाप्रवीणः ।
प्रणतजनकृपालुर्योगिवर्यो निरीक्ष्य
विकसितवदनोऽसौ मोदमग्नो बभूव ॥६८॥

पितृसमनिजबन्धोः पादपद्मं स्पृशन् सन्
विबुधवरतनूजो मन्युना दीप्तमूर्त्तिः ।
समधिकबलमाद्यच्चेतसः सूतसूनो-
रखिलपतिसमक्षं प्रत्यजानाद् विनाशम् ॥६९॥

अनुजमवनिपालः संविनीतं निजाशी-
स्ततिभिरभिमताभिः स्वर्चयन् स्नेहपूर्वम् ।
कुनृपनिधनहेतो र्विष्णुना जन्मभाजा
सह रिपुवधमिच्छन् प्रैरयद् युद्धभूमौ ॥७०॥

अतिशयरमणीयः सूर्यतुल्यः प्रभाभि-
र्विलसितकपिकेतुश्चञ्चलावेगगामी ।
कुलिशसुदृढरूपो वह्निना संवितीर्णः
सितहयसमुपेतः स्यन्दनस्तूर्णमागात् ॥७१॥

सततमृतपरस्य भ्रातुरात्माग्रजस्य
महितविनययुक्त्या प्रादिमद्दक्षिणां सः ।
अतिशयितसुरौजाः स्वं धनुः सन्दधानो
मधुदनुजनिहन्त्रा साकमैन्द्रिश्चकार ॥७२॥

अश्वानां संस्तुतानां प्रखररवजुषां प्रग्रहे धार्यमाणे
श्रीकृष्णेन प्रकामं प्रणतहितकृता सारथीनां वरेण ।
पौनःपुन्येन कर्णं ध्रुवनिधनकृते स्वप्रतिज्ञां प्रकुर्वन्
संशृण्वन् स्वस्तिवाचं श्रुतिसुखजननीमर्जुनः सम्प्रतस्थे ॥७३॥

इति श्रीकविवर्यविन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये एकविंशःसर्गः समाप्तः ।

---

# अथ द्वाविंशः सर्गः

निजसपत्नेन कर्णेन साकं यदा समरमिच्छन् सुरेशात्मजः प्रस्थितः ।
दरमयं तस्य शस्त्रास्त्रसत्कौशलाद् धृदि डुढौके परं हस्तयोर्लाघवात् ॥१॥

पथि च शुष्यन्मुखः सुपरिविभ्यन्मनाः सहजमप्यात्मधैर्यं तदा सन्त्यजन् ।
परमशूरोऽपि धीराग्रगण्योऽप्यसौ मनसि चेत्थं सुनासीरजोऽचिन्तयत् ॥२

अधिरथस्यात्मजः सर्ववीराग्रणीर्जगति वेविद्यते धर्मशीलो महान् ।
भुजबलेन स्वकीयेन विश्वौकसां विहितवानेककः क्षत्रियाणां जयम् ॥३॥

मधुपुरीं पैत्रिकीं राजधानीं विभुर्भयमितो यस्य कृष्णोऽत्यजत् साग्रजः ।
मगधभूपं प्रकृष्टं तमूर्जस्विनां व्यजययातासवज्जं स कर्णो मृधे ॥४॥

युधि न जेष्यामि राधासुतं वैरिणं प्रतिबलं शत्रुसैन्येऽतिदुर्धर्षकम् ।
यदि तदाज्यायसो भ्रातुरेत्याग्रतो निजमुखं दर्शयिष्याम्यलज्जः कथम् ॥५

विमृशतस्तस्य कर्णस्य शौर्यं महत् सुकपिकेतोरुदश्चच रोमावलिः ।
समुदभूत्स्वेदराजि र्वपुष्यस्य तत् करधृतं गाण्डिवं संस्रते स्मायतम् ॥६॥

प्रबलराधेयभीतं सखायं स्वकं समवगत्यान्तरज्ञस्तदानीं हरिः ।
रथहयान् मन्दयन्नस्य शौर्यं भृशं प्रकटयन्नर्जुनं तं तदूचे वचः ॥७॥

ध्रुवमसौ सूतपुत्रो बली विद्यते परममुं त्वं समर्थोऽसिजेतुं रणे ।
विरचयामास पद्मोद्भवस्त्वां सखे निधनकर्त्तारमेतस्य सौतेरिह ॥८॥

भुजसहस्रं दधानोऽर्जुनो विक्रमे प्रथित आसीत् समस्तेऽपि भूमण्डले ।
शिवसमाराधनाप्तेन नैशात्यभृत्परशुना येन याम्यं पुरं प्रेषितः ॥९॥

भुवनमाहिण्डमानोऽखिलं ह्ययद्वयो द्विदशवारं य एकाधिकं भूसुरः ।
निहतवान् क्षत्रियान् वीरविश्वौकसस्तमपि युद्धेऽवधूतं विधत्ते स्म यः॥१०

तमिह भीष्मं त्रिलोकैकवीरं रणे दशदिनं योधयित्वा महाविक्रमम् ।
परमतोऽशाययः स्वेषुपर्य्यङ्कके कथय साद्धं त्वयाऽलं क आयोधने ॥११

गुरुवरद्रोणबाणान् निरोद्धुं क्षमः क इह दृष्टस्त्वदन्यो नरः संगरे ।
नृपतिसूये क्रतौ भूतलस्थैर्नृपैस्तव निदेशोऽखिलैर्माल्यवत् स्वीकृतः ॥१२॥

भगवतो वाक्यमाकर्ण्य तस्याननान्निजबलं चापि सर्वाधिकं शृण्वतः ।
अतिचकाशेऽर्जुनस्य स्ववक्त्रद्युतिर्निखिलमङ्गं तदीयं च पर्यस्फुरत् ॥१३॥

धृतशरीरः स वीरो रसोऽजायत रथमुदा बोधितः सन्दिदीपे भृशम् ।
पुनररिं कर्णमन्वेष्टुकामः क्रुधा सकल देत्त्रक्षिणी चात्मनः प्रैरयत्॥१४

सम्भृणोद् यत्—कृपद्रौणिवीरादिभिः सततमुत्साहितोऽसौ महास्यन्दनः ।
स्वतनुजैः सत्यसेनादिभिः संयुतः कदनमारब्धवानस्ति विद्वेषिणाम् ॥१५

अथ महासंगरं वीक्ष्य सौतेः समे नृपतिधर्मात्मजस्याश्रिताः सैनिकाः ।
समरभूमिं परित्यज्य संदुद्रुवुर्दिशि विदिश्यात्मरक्षाकृते विभ्यतः ॥१६॥

विजयविश्वासमेतेऽत्यजन् पाण्डवा निखिलवीरास्तदीया विषादं गताः ।
चिखिदुरत्यन्तमन्तर्धरित्रीभृत उदचरद्धन्त सर्वत्र हाहाध्वनिः ॥१७॥

निजचमूनां समालोक्य तां दुर्दशामवददेषोऽर्जुनः स्वीयसत्सारथिम् ।
अयि कृपालो नयस्वातिशीघ्रं रथं मम विपक्षस्य कर्णस्य तस्यान्तिकम्१८

सुमहता कौशलेनार्जुनस्यन्दनं सपदि संप्रेरयन् युद्धभूमौ हरिः ।
अनयदत्युद्धतो यत्र कर्णः कृपाविरहितो युध्यते स्मारिदर्पापहा ॥१६॥

उभयपक्षे युयुत्स्वोर्ध्वजिन्योर्महान् गगनभेदी रवः पर्यशोश्रूयत ।
रणमृतानां नृणां दुःस्थितेश्चिन्तया यदुपतेर्मानसं चाप्यदोदूयत ॥२०॥

समरचण्डीमहन्नर्त्तनोज्जृम्भणं परिविलोक्याखिलं विश्वमत्तुं कृपाम् ।
वत जहत्याः करान्यास्तु काल्याः कृतिः स्मृतिपथं सा प्रसह्याध्यरोरुह्यत

रुधिरसंवाहिनीनां नदीनां रये मृतजनच्छिन्नशीर्षाण्यसंख्यान्यहो ।
विदधते सन्तरत्कूर्मकव्रातजं समरभूमौ तदानीं नराणां भ्रमम् ॥२२॥

ध्वजमथालोक्य दूरात् प्लवङ्गाङ्कितं मनसि मोमुह्यमानः स कर्णोऽभवन् ।
निजरथप्रेरकं मद्रदेशाधिपं परमवीरो न्यगादीदिमां भारतीम् ॥२३॥

चिरदिनाभ्यर्थिता मे मनःकामना गतवती पूर्त्तिमेषोऽर्जुनः साम्प्रतम् ।
सहित आयाति कृष्णेन युद्धार्चिषां मम समीपं पतङ्गायमानः स्वयम्॥२४

ध्रुवमिमौ घातयित्वा महाविक्रमावधिगमिष्याम्यहं दुर्लभं सद् यशः ।
किमुत वा मोक्षमाप्स्यामि ताभ्यां हतो युधि परावर्त्तिशून्यं पदं योगिनाम्

समरमिच्छोर्ममाभाति हस्तद्वये बहुमतं स्वादुमद् दुर्लभं मोदकम् ।
विजयलक्ष्मीं वरिष्याम्यहं चान्यथा रणमृतो मोक्षलक्ष्मीं द्वयं मत्प्रियम्२६

वचनमाकर्ण्य कर्णस्य दुर्हृत्समो हृदयशल्योपमः शल्य आहस्म तम् ।
वदसि मिथ्याभिमानस्त्वमित्थं कथं मृगपतेः सम्मुखं याति किं जम्बुकः

त्वमुद्भूर्गर्हिते सूतवंशेऽधमे ह्युदितवान् सोऽस्ति विख्यातभूपान्वये ।
कथमयं संगतः स्याद् रणो वामये जगति युद्धं समानान्वये शोभते ॥२८

यदुपतिस्तस्य बाह्यासुतुल्यः स्थितः सततमेवार्जुनेऽत्राधिकं स्निह्यति ।
न हि कथञ्चित्स गाण्डीवधन्वा त्वया परमवीरो विजेतुं क्षमः संगरे॥२६॥

अहितवाचं निशम्याथ शल्यस्य तां निजरिपोर्मातुलस्यान्तरङ्गं विदन् ।
गिरिरिव व्याहतोऽम्भोनिधेरूर्मिभिर्न विजहौ धैर्यमूचे च सूर्यात्मजः ३०

तव मनोभ्रान्तिरेषा वरीवृत्यते ध्रुवमहं संविजेष्ये सपत्नार्जुनम् ।
अयि मदीये महोत्साहवारान्निधिर्हृदि समुज्जृम्भते कूलमुज्झन्निव ॥३१॥

यदि मृतः सम्भविष्याम्यहं संगरे भगवता रक्षितेनार्जुनेनाऽद्य चेत् ।
तदपि कीर्त्तिर्मदीया शरत्पूर्णिमाशशिबिम्बेवोद्गता स्याज्जगन्मण्डले ३२

दशमितो विद्यते सप्तमो वासरो व्यतिगतः संगरस्यास्य शूरार्दिनः ।
उभयपक्षीयनिर्णीतिमद्यैव भो ननु जये वाऽजये वा विधास्याम्यहम् ।।३३॥

इति गिरामन्तराले हि कर्णस्य सन्निकटमानीतवान्नर्जुनस्यन्दनम् ।
यदुपतिस्तर्हि कर्णः प्रपेदे परां स्वहृदये-भूतपूर्वां प्रमुत्सन्ततिम् ॥३४॥

तमुभयोर्द्रष्टुकामा रणे वीरयोरुपगताः सैनिकास्तत्र पक्षद्वयात् ।
वियति संख्यातिगा सद्विमानावलिः सकलनाकौकसां संरराजे तदा॥३५

सुरपतेः सूनुरास्तेऽर्जुनश्चैकतोऽपरत आभाति कर्णो दिनेशात्मजः ।
कुशलकामौ द्वयोश्चापि जन्मप्रदौ निजविमानस्थितौ खे तदा रेजतुः ३६

उदरजातावुभौ तौ पृथाया जगत्प्रथितपत्न्यास्तु पाण्डोर्धरित्रीपतेः ।
समबलौ गौररूपौ समानाकृती हृतहृदा राजचिह्नेन संभूषितौ ॥३७॥

सिततुरङ्गौ सुवर्णप्रभामण्डितप्रविलसत्स्यन्दनौ छत्रशोभान्वितौ ।
कवचयुक्तौ तथा वीजितौ चामरैर्धृतकिरीटौ लसत्कुण्डलौ राजतः ॥३८॥

समभवद् दिव्यशस्त्रास्त्रशिक्षोभयोः सुरथसञ्चालकौ कृष्णमद्राधिपौ ।
रणकृतोः स्यन्दनौ चालयित्रोस्तथा समरभूमौ दृशोऽन्योन्यमालिङ्गिताः ॥

सहजयोर्युद्धमत्यद्भुतं भीषणं परमदुर्धर्षयोर्यद्धयजञ्जन्यत ।
असुरगन्धर्वयक्षामराः किन्नरा अपि नरा द्रष्टुकामाः समेऽत्रायगुः ॥४०॥

नरवरौ तौ कदा सायकान् कर्षतो धनुषि चारोप्य वाऽऽकृष्य तानस्यतः ।
इति न कश्चिन्निरैक्षिष्ट तत्र स्थितोऽसुरसुराणां गणश्चाप्यमोमुह्यत ॥४१॥

प्रलयकालीनमेघावली यादृशीद्विरदशुण्डायिता वारिधाराः सदा ।
किरति तद्वत्तयोः वज्रकोदण्डकौ कुरुत उग्रां प्रवृष्टिं हि शैलीमुखीम् ॥४२

मधुसपत्नानुशिष्टप्लवङ्गध्वजप्रहितमप्यस्त्रकं ब्रह्मनामाद्भुतम् ।
विफलयामास वीरेन्द्रकर्णो यदा चकिततां जग्मुराकाशसंस्थाः समे ४३

तदनु कर्णः स्वकर्णान्तमाकृष्य सत्र-स्वधनुरत्यन्तभीमं च वज्रोपमम् ।
दशशरांस्तान्निशातांस्तदा प्राक्षिपद्धतशरीरस्तु यैर्माधवो व्याकुलः ॥४४

अतिशयं क्रोधमाप्तेन दैत्यारिणा सपदि संबोधितः संनिरस्यन्निषून् ।
नृपतिपाण्डोः सुतोऽच्छादयत् खं यतो निखिलविश्वं ममज्जान्धकारे भृशम्

प्रखरमुद्धर्तुकामो निषङ्गादिषुं दिनमणेरात्मजोऽभूत् समन्युर्यदा ।
अवसरे तत्र नागोऽश्वसेनः पुराऽर्जुनकृतं विप्रियं संस्मरन् प्राविशत् ।.४६

न हि विवेदस्म नागस्य तस्यागतिं निजशरं दिव्यमेषोऽक्षिपद् विद्विषि ।
मधुरिपुस्तद् रहस्यं विदित्वा विभुर्नतमकार्षीत् तदा पाण्डवस्यन्दनम् ॥४७

उरगसंसक्तबाणेन जिष्णवर्पितं मुकुटमस्यार्जुनस्यात्यमेघं च तत् ।
सपदि संचूर्णितं सद् धरित्रीतले पतितमालोक्य कृष्णोऽप्यभूद् विस्मितः

फणियुतः सायकः सारथे कौशलाद् विफलतामाप्तवांस्तर्हि भूयः फणी ।
शरममोघं प्रवेष्टुं समैच्छत् तदा विदितवांस्तच्छलं तिग्मरश्मेः सुतः ।।४६

त्वमयि कोऽसीति पृष्टः पुराकालिकार्जुनकृतं चापराधं समुद्बोधयन् ।
फणिपतिः प्राह कर्ण मदीयं वचः शृणु सखे त्वद्धितं कर्त्तुमिच्छाम्यहम्

त्वदरिणा खाण्डवं भस्मसात्कुर्वता विपिनमस्मज्जनुर्दात्रिका घातिता ।
प्रभृति तस्माद्दिनाद्धन्तुमिच्छामि तं त्ववसरं प्राप्तवानस्म्यहं साम्प्रतम् ।।

गरुडकेतोर्विदग्धत्वहेतोरहं मुकुटमेवास्य संभङ्क्तुमीशोऽभवम् ।
पुनरपि स्वाशुगे मां समारोपय ध्रुवमहं कर्त्तयिष्यामि शीर्षं रिपोः ।।५२

भवदरिं कोऽपि लोकत्रये नाधुना सकलदेवेषु सरक्षितुं स्यात् क्षमः ।
त्वमयि मां प्रेरयस्वैकवारं पुनर्वधमुपैष्यत्यवश्यं सपत्नोऽर्जुनः ।।५३।।

निशमयंस्तद्गिरं मन्युताम्रेक्षणो ह्यभिदधे पन्नगं भर्त्सयन् भानुजः ।
अवदधन्नीचतां नैव कुर्यामहं भुजबलस्यावलम्बो निजस्यास्ति मे ।।५४।।

निकृतिमाप्तः स कर्णेन नागः पुनर्व्यथितचित्तो भृशं हन्तुकमोऽर्जुनम् ।
परिगृहीतास्त्ररूपो महादीप्तिमान् गगनगो विक्षितः सर्वविद्विष्णुना ।।५५।।

अभिदधे तेन पाण्डोः सुतोऽतिप्रियो वियति योऽयं विसर्पन् समागच्छति
अतिनिशातेन नाराचराजाऽऽत्मनो जहि मदीयं वचो मन्यमानः सखे ५६

तदनु पार्थो निषङ्गान्महासायकं त्वरितमाकृष्य कर्णान्तिकं प्राक्षिपत् ।
विषधरो लक्षधा तेन संचूर्णितो व्यपगतप्राण एषोऽपतद् भूतले ।।५७।।

भगवता साधुवादाः पृथासूनवे परिवितीर्णाः शतं मोदमाबिभ्रता ।
मघवजन्मा समुत्थाय चालिङ्गितः प्रथमदुर्गो जितश्चेत्यसौ व्याहृतः ।।५८

समरमातन्वता भीषणं शत्रुणा सह तदानीमकस्माद् रवेः सूनुना ।
भृगुसुतेनार्पितं ब्राह्ममस्त्रं वरं तदिह संविस्मृतं शापतस्तन्मुनेः ।।५६।।

तदनु जग्राह तत्स्यन्दनाङ्गान्यहो वसुमती तद्यपि स्वीयमोजो महत् ।
परिदधद् वीरवर्य स धैर्यं निजं न हि जहौ तत्र संयुध्यमानो रणे । ६०॥

पुनरपि ब्रह्मणोऽस्त्रं तमत्यद्भुतं प्रति युयुञ्जेऽर्जुनस्तच्च भूयोऽर्कजः ।
विफलयन्नुग्रनाराचसङ्घान् स्वकानतिनिशातान् प्रचिक्षेप मूर्ध्नि द्विषः ॥६१

शिततमैः कर्णसंनोदितैः सायकैरुदधिजायाश्च पत्या समं पाण्डवः ।
अतिशयव्याकुलत्वं प्रपेदे तथा स्वविजये चापि नैराश्यमापत्तदा ॥६२॥

सुहृदमु स्व हतोत्साहमालोकयन् वचनमुच्चारयञ्छ्रवान्त्वनायाः प्रभुः ।
उचितधैर्यं समालम्बयन् व्याहरत् कथमये त्वं विमूढत्वमापद्यसे ॥६३॥

अतच्चरादद्य सँल्लक्षिताल्लक्षणादयमरिः स्वानसूंस्तूर्णमुज्झिष्यति ।
निरलसोऽजस्रमेतर्हि तस्मात् सखे विकिरतु प्रत्यमुं शत्रुमुग्राञ्छरान् ॥६४।

रथनुदा प्रेरितोऽसौ क्षिपन् सायकानभिदधे भानुजेनार्जुनो वीर भोः ॥
त्वमसि धर्मज्ञधुर्यो न यावन्मया स्वरथचक्रः क्षितेरूर्ध्वमानीयते ॥६५॥

रणनिरोधस्त्वया तावदापाद्यतां नियम आयोधनस्यैष वेविद्यते ।
विपथमाश्रित्य गच्छेन्नरस्त्वादृशो यदि कथं धर्मसेतुर्भवेद् रक्षितः । ६६॥

निगदितं तन्निशम्यार्जुनः सद्वचो दिनपतेः सूनुना त्यक्तयुद्धोऽभवत् ।
परमसौ धर्ममर्मज्ञ आत्मा सतां व्यहसदुच्चैस्ततो धर्म्यमूचे वचः ॥६७॥

अनृतमार्गं च धर्मात्मभिर्गर्हितं श्रितवतो धार्त्तराष्ट्रस्य धर्मद्रुहः ।
स च सदा दक्षिण बाहुरेतद्वधे तव महान् धर्म आस्ते सतां सम्मतः॥६८

वसति योऽधार्मिकाणां सदा संगतो प्रकुरुते तन्निदेशस्य संपालनम् ।
भवति सोऽप्याततायी वधार्हो नरः श्रुतिपुराणादिशास्त्रेष्वयं निर्णयः ६९

अधम एतादृशोऽवस्थितिं कामपि ह्यधिगतोऽप्याशु वध्योऽस्ति धर्मात्मना।
अयमतः सत्वरं हन्यतां न त्वया किमपि चित्ते समालोचनीयं सखे ॥७०॥

असुरहन्तुर्निदेशेन संप्रेरितं शरततिं प्रक्षिपन्तं पृथायाः सुतम् ।
धरणिसस्थोऽर्कजन्मा निशातैः शरैर्व्यथितवांस्तं तथा सारथिं माधवम् ॥७१

स्वरथनेमिं धराग्रस्तमप्यन्तरा प्रववृते सोऽतियत्नेन निष्कासितुम् ।
सुरपतेः किन्तु पुत्रं स्वकीये विधौ समवलोक्यान्तरायं युतो मन्युना ॥७२

उरसि तस्यातितीव्रं शरं न्यक्षिपन्निपतितो मूर्च्छितः स्यन्दने स्वेऽर्जुनः ।
तदनु स स्वं रथाङ्गं क्षितेरूर्ध्वगं किल विधातुं प्रयत्ने प्रवृत्तोऽभवत् ॥७३

प्रबलया स्वीयशक्त्याऽथ सम्पूर्णया निजकृतौ व्यापृतो भानुजन्माऽभवत् ।
अतिगतो बोधमत्रान्तरे पाण्डवो निदिदिशेऽसावधानं निहन्तुं रिपुम् ॥७४

अपरकार्ये प्रसक्तं हरे वैरिणं न रणधर्मेण हन्तुं समादिश्यते ।
इति वचो ह्यर्जुनीयं निशम्य प्रभुर्विदित आस्ते न ते धर्म इत्युक्तवान् ॥७५

अतिशयं धर्मतत्त्वं सुसूक्ष्मं सखे ह्यहमये वेद्मि तन्मे निदेशस्त्वया ।
सपदि संपाल्यतां शीघ्रमेवान्यथा युधि न संजेष्यते मन्यतां मद्वचः ॥७६

आज्ञामिमां भगवतः समवाप्य विष्णोरारोपयन् धनुषि बाणमसौ करालम् ।
संस्मृत्य सर्वविबुधान् भगवत्प्रपन्नो वक्षो रिपोः समभिलक्ष्य निरास पार्थः ॥

चीत्चक्रुर्दिक्करीन्द्रा अहिपतिसुधृता काश्यपी सञ्चकम्पे
संक्षोभं प्रापुरुग्रं बत जलनिधयो भूधराः कम्पमापुः ।
हाहाकारैर्जनानामखिलमपि वियन्मण्डलं व्याप्तमासीद्
यस्मिन् कालेऽन्यकार्ये रतरवितनयं जिष्णुजन्मा जघान ॥७८

इति श्रीकविवर्यविन्ध्येश्वरीप्रसादशास्त्रिविरचिते कर्णार्जुनीये
महाकाव्ये द्वाविंशः सर्गः समाप्तः ।

———

समाप्तोऽयं ग्रन्थः

पं० श्री विन्ध्येश्वरीप्रसाद शास्त्री जी से मैं चिरकाल से परिचित हूँ। आप वाराणसी के उन गिनेचुने संस्कृत विद्वानों में हैं, जिन्होंने संस्कृत के प्रचलित अध्ययनाध्यापन के साथ-साथ संस्कृत में नवीन रचना का भी काम किया है। साथ ही आपने दश संस्कृत पुस्तकों का और चार हिन्दी पुस्तकों का भी प्रणयन किया है। इसके अतिरिक्त 'सूर्योदयः" और "सुप्रभातम्" नामक उच्चकोटि की संस्कृत-पत्रिकाओं का सम्पादन भी आप बड़ी योग्यता के साथ चिरकाल तक करते रहे हैं।

यह सर्वविदित है कि संस्कृत में उपादेय नवीन ग्रन्थों का प्रणयन अच्छे पंडितों के लिए भी साध्य नहीं होता। आपको सुमधुर संस्कृत भाषा पर अधिकार है और आपने अपनी रचनाओं से देववाणी की प्रशसनीय सेवा की है। आप विद्याप्रेम के लिए वाराणसी के पण्डितों में विशेष स्थान रखते हैं। मैं आपके इस "कर्णार्जुनीयम्" महाकाव्य का सर्वथा प्रचार चाहता हूँ।

( डाक्टर ) मंगलदेवशास्त्री
Ex-Vice-Chancellor, Sanskrit University,
Varanasi.

# कविवंश-परिचयः

पारेसरय्वा महनीयकीर्तिभि., श्रीमद्भरद्वाजमुनीन्द्र-गोत्रजैः ।
द्विवेदसज्ञैर्विबुधैः सुसेवितो, ग्रामः "सरारा" भिध आचकास्ति य. ॥ १ ॥

ततस्तु कश्चित् प्रथितः सुधीश्वरो, मिश्राभिधैर्गौतमगोत्रसम्भवैः ।
"लारोड"-पार्श्व-स्थित-"नैनुवापुरे," यत्नात् समानायि सुतासमुद्भवः ॥२॥

तद्वंशजा मिश्रपदेन भूषिता, गोत्रं निजं तत् स्मृतिसम्मत दधुः ।
तन्नैनुवामिश्रसमाह्वयेन ते, प्रसिद्धिमाप्ता इह भारतावनौ ॥ ३ ॥

ततश्च चम्पारणसारणादिषु, सन्मण्डलेषु प्रसृतिं प्रपेदिरे ।
तेष्वेव कश्चिद् बुधशम्भुनामको, नीतो विलासाख्यपुरे च सारणे ॥ ४ ॥

तदुद्भवश्रीबुनियादशर्मणः, सुसेवितश्रौतसमस्तकर्मणः ।
चतुष्षु पुत्रेषु कनिष्टनैष्ठिकः, श्रीरामनाथः प्रबभूव विद्वरः ॥ ५ ॥

उजागराख्यं त्रिषु तस्य सूनुषु, ज्योतिर्विदां मौलिमणिं रविप्रभम् ।
प्रसिद्ध-"चम्पारणबेतिया"-नृपो, न्ययुङ्क्त सर्वाहितराज-पण्डितम् ॥ ६ ॥

स्वकीयमृत्योः समयं समीपगं, विभाव्य सर्वत्र च निःस्पृहो भवन् ।
समेत्य काश्यां पुरि मुक्तिधामनि, जहौ निजासूंस्तृणवत् स योगिराट् ॥ ७ ॥

तदीयपुत्रो तुलसीति संज्ञया, ज्यायान् कनीयानपि कोदयीति च ।
आद्यः पिता प्रेमदयाप्रदर्शकोऽन्यो जन्मदो द्वौ मम बोधवर्धकौ ॥ ८ ॥

सन्तानयुग्भ्रातृचतुष्टयस्य मे, विन्ध्याप्रसादस्तु सहोदराग्रजः ।
अस्यां ममाभ्रान्तकवित्वसम्पदि, वैदुष्यमस्यापि च कारणायते । ६ ॥